कीदृशेन । सुवर्णपङ्केरुहाणां कनककमलानां पांसुभिः परागैर्मांसलैः स्थूलैः । निबिडैरित्यर्थः । सुरापगाया आकाशगङ्गाया वीचयस्तरङ्गाः सखा(यः) येषाम् । वीचिषु सञ्चरद्भिरित्यर्थः । तादृशैः समीरणैर्वातैर्निषेव्यमाणेन नितरा-मध्वश्रमापनोदेन परिचर्यमाणेन । तत्रत्यन्दुखानीन्द्र(व)देवानुभूय स्थित-वानित्यर्थः ॥ १८ ॥

> यदर्थिनामर्थितमर्थमर्पयत्
> पुलोमजोत्तंसितपुष्पपल्लवम् ।
> तदेव तेनामरशाखिपञ्चकं
> चमूगजालानमकारि मानिना ॥ १९ ॥

यदिति । मानिना अभिमानशालिना तेन हयग्रीवेण तदेव तथा प्रसिद्धमेव अमरशाखिनां सुरपादपानां पञ्चकम् । "मन्दारः पारिजातकः । सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम् ।" इत्यमरः । एवं पञ्च सुरद्रुमा अपि चमूगजानां सेनागजानामालानं बन्धस्तम्भः अकारि कृतम् । तेषु सुरद्रुमेषु गजान् बबन्धेत्यर्थः । तदेवेति निर्दिष्टं यच्छब्देनोपपादयति । यत् सुरद्रुमपञ्चकं कर्तृ, अर्थिनां याचकानाम् अर्थितं प्रार्थितमर्थं पदार्थमर्पयद् भवति । किञ्च पुलोमजया शचीदेव्या उत्तंसितानि शिरोऽलङ्कारीकृतानि पुष्पाणि पल्लवानि च यस्य तथा च भवति । एवमुत्कृष्ट-मपि गजबन्धनस्तम्भं कृतवानयमित्यहो तस्य नैर्घृण्यमिति भावः ॥ १९ ॥

> यदा मदान्धैरसुरेन्द्रसैनिकै-
> रहारि यद्यत्पदमुद्यतायुधैः ।
> ततोऽपि पूर्वप्रहरे ततस्ततः
> पलायि भीतैरमृतान्धसां गणैः ॥ २० ॥

यदेति । यदा यस्मिन् काले, मदान्धैरहङ्कारेणाविशेषज्ञैरसुरेन्द्रस्य हयग्रीवस्य सैनिकैः सेनासमूहैः । उद्यतायुधैरुद्धृतशरचापाद्यस्त्रविशेषैः

१. 'दारु' इति पाठान्तरम्।

सद्भिः। यद्यत् पदं स्थानमहारि हृतं स्वीकृतम्। ततोऽपि तस्मात् कालादपि पूर्वस्मिन् प्रहरे यामे, 'द्वौ यामप्रहरौ समौ' इत्यमरः। ततस्ततः तस्मात् तस्मात् प्रदेशाद् भीतैरमृतान्धसां देवानां गणैः पलायि पलायितम्। भावे चिण्। "उपसर्गस्यायतौ" (८-२-१९) इति पराशब्दरेफस्य लत्वम् ॥ २० ॥

अथाभ्यमित्रोऽजनि तत्र वृत्रहा
सहामरैरभ्रमुकान्तवाहनः।
स्फुटामपि ह्यभ्रघटातिरस्क्रियां
न दीर्घकालं प्रसहेत भानुमान् ॥ २१ ॥

अथेति। अथ सुरगणापक्रमणानन्तरम्। तत्र तेषां मध्ये वृत्रहा इन्द्रः। अभ्रमुकान्त ऐरावतः, स वाहनं यस्य तथा सन्। अमरैः सह पूर्वं पलायितैरपि स्वामिनो युयुत्सादर्शनाद् योद्धुमेवानुमिलितैरित्यर्थः। अभ्यमित्रोऽजनि अमित्रमभिमुखीकृत्य स्थितो जातः। दृष्टान्तेनोक्तमर्थं समर्थयति। भानुमान् सूर्यः स्फुटामपि स्फुटतया स्थितामप्यभ्रघटया मेघसमूहेन या तिरस्क्रिया तिरोधानं ताम्। दीर्घकालं न प्रसहेत न क्षमेत। हि यस्मात् तस्मादयमभ्यमित्रोऽभूदित्यर्थः ॥ २१ ॥

ततो हयग्रीवसुराग्रगामिनो-
रभूदभूयस्तरवाक्यविस्तरम्।
प्रशस्तशस्त्रास्त्रमिथोविघट्टन-
स्फुटानलार्चिष्कणभीषणं रणम् ॥ २२ ॥

तत इति। ततोऽनन्तरम्। हयग्रीवस्य सुराग्रगामिन इन्द्रस्य च। तयो रणं युद्धमभूत। कीदृशम्। भूयस्तरो बहुतरः तथा न भवतीत्यभूयस्तरः अपूर्व (र्वः) इत्यर्थः। वाक्यविस्तरोऽन्योन्याधिक्षेपवाक्प्रपञ्चो यस्मिन्। प्रशस्तानामुत्कृष्टानां शस्त्राणामस्त्राणां च मिथोविघट्टने अन्योन्यसंघट्टने स्फुटैः प्रकाशमानैरनलस्यार्चिष्कणैः स्फुलिङ्गैर्भीषणं भयङ्करम्। तादृशं रणं सञ्जातम् ॥ २२ ॥

स वज्रनिष्पेषविभिन्नमस्तक-
प्रभिन्नकुम्भीनि चकार जम्भजित्।

निरन्तरोदित्वरबाणधोरणी-
निमग्नवाजीनि बलानि वैरिणः ॥ २३ ॥

स इति । स तथा प्रसिद्धो जम्भजिदिन्द्रः वैरिणो हयग्रीवस्य बलानि सैन्यानि वज्रनिष्पेषेण वज्रप्रहारेण विभिन्नमस्तकाः विदारितकुम्भस्थलाः प्रभिन्नकुम्भिनो मत्तवारणा येषु । "प्रभिन्नो मत्तवारण" इति निघण्टुः । निरन्तरं निर्विवरं यथा भवति तथोदित्वरायामुत्पतनशीलायां बाणधोरण्यां शरप्रवाहे निमग्ना वाजिनोऽश्वा येषु तथाविधानि चकार कृतवान् ॥ २३ ॥

रणाङ्गणागत्वररक्तवाहिनी
विभिन्नयान्वक्रियताभ्रगङ्गया ।
प्रफुल्लबन्धूकवितानबन्धुरा
तुषारभूमीभृदुपत्यकास्थली ॥ २४ ॥

रणेति । रणाङ्गणाद् युद्धभूमेः सकाशाद् आगत्वरया आगमनशीलया रक्तवाहिन्या रुधिरनद्या विभिन्नया मिश्रया । संपृक्तयेत्यर्थः । अभ्रगङ्गया आकाशगङ्गया कर्त्र्या । प्रफुल्लानां विकसितानां बन्धूकानां जपापुष्पाणां वितानेन समूहेन बन्धुरा सुन्दरा । तुषारभूमीभृतो हिमवत उपत्यकास्थली आसन्नभूमिः, "उपत्यकाद्रेरासन्नभूमिः" इत्यमरः, अन्वक्रियत अनुकृता । सा(तदशातिशुभ्रा)पि गङ्गासलिलपङ्कशोणितमिश्रितत्वाद् विकसितबन्धूकपुष्पवती हिमवत्कटकस्थलीव शुशुभ इत्यर्थः ॥ २४ ॥

अथासुरेन्द्रः सदृशोर्जितं रिपुं
सुरेन्द्रमाप्त्वा सुतरामजृम्भत ।
न किं भवत्युज्ज्वलितं दवानलं
प्रपद्य सद्यो भृशमूष्मलो रविः ॥ २५ ॥

अथेति । अथानन्तरमसुरेन्द्रो हयग्रीवः सदृशोर्जितमात्मना तुल्यपराक्रमं सुरेन्द्रं रिपुमाप्त्वा शत्रुत्वेनाधिगम्य सुतरामत्यर्थमजृम्भत प्रवृद्धप्रतापो बभूव । अत्र दृष्टान्तमाह—रविः सूर्यः उज्ज्वलितं प्रदीप्तं दवानलमरण्यवह्निं प्रपद्य प्राप्य सद्यस्तदानीमेव भृशमधिकमूष्मल औष्ण्ययुक्तो न किं भवति । भवत्येवेत्यर्थः ॥ २५ ॥

अथाटनीसङ्कटितोरुकिङ्किणी-
झणज्झणद्ध्वानकरम्बिताम्बरम् ।
हरिर्दधावभ्रविशेषभूषणं
विचित्ररत्नद्युतिकर्बुरं धनुः ॥ २६ ॥

अथेति। अनन्तरं हरिरिन्द्रो धनुर्निजकार्मुकं दधौ धृतवान् । कीदृशम् । अटन्या(इवान्तरोः चापकोट्या) सङ्कटितानां सम्बद्धानामुरूणां पृथूनां किङ्किणीनां घण्टानां झणज्झणद्ध्वानेन । झणज्झणदिति शब्दानुकरणम् । तद्रूपशब्देन करम्बितं व्याप्तमम्बरं नभस्तलं यस्य । विचित्राणां भिन्ना(नां) नानावर्णानां रत्नानां द्युतिभिः प्रभाभिः कर्बुरं (अम्बरं शबलम्)। अभ्रस्य मेघस्य विशेषभूषणं विशिष्टाभरणं जातम् । "अम्बुधरमण्डनं धनुः" इत्यादिप्रयोगप्रसिद्धमस्याअल-ङ्करणत्वम् । तादृशं धनुः गृहीतवानिति सम्बन्धः ॥ २६ ॥

श्रुतिप्रवृत्तानृजुतामसुश्वतः
सदात्मवादानिव तस्य सायकान् ।
अखण्डयच्च ण्डतरैर्महासुरः
प्रसह्य पाषण्डनयैरिवाशुगैः ॥ २७ ॥

श्रुतीति । महासुरो हयग्रीवश्चण्डतरैरतिक्रूरैराशुगैः शरैस्तस्येन्द्रस्य सायकान् शरान् प्रसह्य बलात्कारेणाखण्डयत् खण्डितवान् । पाषण्डनयैः पाष-ण्डानां सौगतपाशुपतदिगम्बरादीनां नयैस्तर्कैः । यत् सत् तत् क्षणिकमित्याद्यनु-मानोपोद्बलितदुर्वादडम्बरैः । सदात्मवादान् सदात्मानो वेदान्तिनः । अदास्त्यात्मे-त्यवष्टम्भादास्तिकाः । तेषां वादानिव । यथा पूर्वपक्षतया दुस्तर्कैराक्षिप्यन्ते तथेत्यर्थः । कीदृशान् । श्रुतिप्रवृत्तान् आकर्णाकृष्टत्वात् कर्णावधेः प्रवृत्तान् सायकान् ; अन्यत्र श्रुतेः वेदात् प्रवृत्तान् । ऋजुतामसुश्वतः ऋजुतां सरलतामत्यजतः, दण्डवदृजूनित्यर्थः; अन्यत्र ऋजुता सत्यत्वम्, तामसु-श्वत इति समानम् ॥ २७ ॥

अथाशनिः स्वप्रतिपक्षनाशिनी
बलारिणा या समरे समीरिता ।
न्यवर्ततास्मादफलैव दानवा-
दनेलमूकादिव सूरिभारती ॥ २८ ॥

अथेति । अथानन्तरं बलारिणेन्द्रेण समरे युद्धे स्वस्य प्रतिपक्षान् शत्रून् नाशयतीति तादृशी या अशनिः वज्रं समीरिता प्रयुक्ता (या ? सा) अशनिः अफलैव निष्फलैव दानवाद् हयग्रीवात्सकाशात् न्यवर्तत पराङ्मुखीभूता । तच्छरीरविदारणमकृत्वैव निवृत्तेत्यर्थः । अत्रोपमामाह । सूरीणां महाकवीनां भारती गद्यपद्यादिरूपा सरस्वती अनेलमूकादिव । स्वयं वक्तुं परेणोक्तमर्थ-द्वारा श्रोतुं चाशिक्षितो ह्यनेलमूकः । 'अनेलमूकस्तु वक्तुं श्रोतुमशिक्षितः" इत्यमरः । तत्सकाशान्निष्फला यथा निवर्तते सूरिभारती तथास्मादशनिर्निवृत्ते-त्युपमा । स्वप्रतिपक्षनाशिनीत्युभयत्र साधारण्यात्साधारणधर्मः । पूर्वत्राफलत्वं तदविदारणम्, अन्यत्र तु तद्बोधनमिति विवेकः ॥ २८ ॥

तो हयग्रीवमुदग्रविग्रहं
विबुध्य दुर्निग्रहमग्रधाविभिः ।
सहासदैतेयनिरीक्षितैः सुरैः
सह प्रदुद्राव सहस्रलोचनः ॥ २९ ॥

तत इति । ततोऽनन्तरं सहस्रलोचनः इन्द्रः । उदग्रविग्रहमुत्कृष्टसंग्राम-चातुर्यं हयग्रीवम् । दुर्निग्रहं निग्रहीतुमशक्यं विबुध्य ज्ञात्वा । अग्रधाविभिः पुरस्तात् पलायनशीलैः, अत एव सहासैः सपरिहासैर्दैतेयैरसुरैर्निरीक्षितैरव-लोकितैः सुरैः सह प्रदुद्राव प्रधावनं कृतवान् ॥ २९ ॥

द्विषद्बलाक्रान्तवृषण्वसुर्वृषा
मृषार्थमिन्द्रत्वमसाववधारयत् ।
भियोपगूढो हि विहीयतेतरां
प्रियोऽप्यसूयाकुलयेव सम्पदा ॥ ३० ॥

द्विषदिति । वृषा इन्द्रः । द्विषद्बलैः शत्रुसैन्यैराक्रान्तमाहृतं वृषण्वसु ऐन्द्रं धनादि वस्तु यस्य "वृषण्वसु धनाधीन्द्रम्" इत्यमरः । तथा सन् । असावि-न्द्रत्वं मृषार्थमयथार्थमर्थशून्यमधारयद् धृतवान् । 'इदि परमैश्वर्ये' इति धातो-र्निष्पन्न इन्द्रशब्दः । ऐश्वर्यविनाशात्तदर्थाभाव इति मृषार्थत्वम् । भिया त्रासेनो-पगूढ उपाश्रितः पुरुषः प्रिय इष्टः सन्नपि सम्पदा श्रिया विहीयतेतरां दूरं परित्य-ज्यते । अत्र प्रसिद्धौ । भीः श्रीश्च सहैकत्र न वर्तेत इत्यर्थः । अत्रोत्प्रेक्षते असूया-

कुलयेवेति। असूयायुक्तया। स्त्रीणां सपत्नीदर्शनादसूया संभवत्येव। श्रियो भियश्च स्त्रीत्वादिदमुत्प्रेक्ष्यं भवति॥ १०॥

महासुरस्तावदहानि कानिचि-
न्महेन्द्रलक्ष्मीमनुभूय भूयसीम्।
अमेयमायाकृतविग्रहान्तरो
निरत्ययं धाम जगाम वेधसः॥ ११॥

महासुर इति। तावत्तदानीं महासुरो हयग्रीवो भूयसीं बहुतरां महेन्द्रस्य लक्ष्मीं सम्पदम्। कानिचिदहानि कांश्चिद्दिवसान् अत्यन्तसंयोगे द्वितीया। अनुभूय उपभुज्य। अमेयया मातुं परिच्छेत्तुमशक्यया मायया कृतं निर्मितं विग्रहान्तरमन्यद् विग्रहं येन तथा सन्। वेधसो ब्रह्मणो निरत्ययं नाशरहितं धाम भवनं सत्यलोकम्। जगाम गतवान्। ऐन्द्रपदलाभेऽप्यतृप्तस्तदुपरिलोकम(ह ? पि) स्वाधीनं कर्तुं ततो गतवानित्यर्थः॥ ११॥

ततस्तमैक्षिष्ट स पद्मविष्टरे
सुखोपविष्टं परितुष्टमानसम्।
मुनीश्वरेष्वास्यविवर्तनं विना
कृताभिमुख्यं परितः स्थितेष्वपि॥ १२॥

तत इति। ततः सत्यलोकगमनानन्तरम्। स हयग्रीवः पद्मविष्टरे पद्ममये आसने (सुखं) स्वच्छन्दं यथा भवति तथोपविष्टमासीनं तं वेधसमैक्षिष्ट दृष्टवान्। कीदृशम्। परितुष्टमानसं सन्तुष्टहृदयम्। परितः समन्ततः स्थितेष्वपि मुनीश्वरेषु पुलस्त्यपुलहवसिष्ठादिषु। आस्यविवर्तनं मुखपरिवर्तनं (विना) विहितम् आभिमुख्यमभिमुखीभावो येन तादृशम्। तस्य चतुर्मुखत्वात् परितः स्थितान् प्रत्याभिमुख्यमिति भावः॥ १२॥

अकाण्डनिद्राजडनेत्रपक्ष्मणः
क्षणार्धमस्वस्थधियो यदृच्छया।
जहार वेदांश्चतुरोऽपि वेधस-
श्चतुर्मुखीतोऽपि सदं स मायया॥ १३॥

अकाण्डेति। सः हयग्रीवः अकाण्डे अनवसरे या निद्रा तया हेतुना जडान्यलसानि नेत्रपक्ष्माणि यस्य। क्षणार्धमल्पकालमस्वस्थधियोऽजाग्रद्-

बुद्धेर्वेधसः। यदृच्छया दैवयोगाच्चतुर्मुखीतोऽपि मुखचतुष्कादपि । चतुरो वेदानपि समं समकालमेव, मायया कारणभूतया जहार हृतवान् ॥ ३३ ॥

जगत्त्रयीवन्द्यमहत्त्वशालिनी
शिखित्रयीव स्वयमन्त्यजन्मनः ।
अथ त्रयी तस्य वशं गतान्वभू-
दशेषशोच्यामतिदुस्सहां दशाम् ॥ ३४ ॥

जगदिति । अथ तदनन्तरम्। जगत्त्रयीवन्द्येन त्रैलोक्यवासिभिर्वन्द्येन महत्त्वेन महिम्ना शालिनी श्लाघ्या, 'शल श्लाघायाम्' इति धातुः । त्रयी वेदाः। शिखित्रयी आहवनीयाद्यग्नित्रयम् । अन्त्यजन्मनः शूद्रस्येव तस्य हयग्रीवस्य वशं गताधीनतां प्राप्ता सती स्वयमशेषैः सर्वजनैः शोच्यां शोचितुमर्हामतिशयेन दुःसहां सोढुमशक्यां दशामवस्थामन्वभूदनुभूतवती ॥ ३४ ॥

प्रमुष्य वेदान् जगतामसूनिव
प्रकामचण्डप्रकृतिः कृतान्तवत् ।
सह स्वसैन्यैस्तरसा रसातलं
प्रविश्य तत्र क्वचन न्यलेष्ट सः ॥ ३५ ॥

प्रमुष्येति ।स हयग्रीवः जगतां जगद्वासिनामसूनिव प्राणानिव (वेदान्) प्रमुष्य चोरयित्वा । कृतान्त इव प्रकामचण्डा अतिशयेन क्रूरा प्रकृतिः स्वभावो यस्य तादृशः स्वसैन्यैः सह तरसा क्षिप्रं रसातलं पातालं प्रविश्य तत्र पाताले क्वचन क्वापि प्रदेशे न्यलेष्ट निलीनवान् गूढं स्थितवान् ॥ ३५ ॥

विधेर्मुखश्रीर्विमतावलुण्ठित-
श्रुतेरतीवाधिगता विवर्णताम् ।
तमस्समाच्छादितभास्करद्युते-
र्दिनश्रियस्तुल्यदशामशिश्रियत् ॥ ३६ ॥

विधेरिति । विमतेन शत्रुणावलुण्ठिता वञ्चिता, 'लुटि स्तेये' इति धातुः, श्रुतयो वेदा यस्मात्तस्य विधेर्ब्रह्मणो मुखश्रीर्मुखानां शोभा । अतीवात्यर्थं विवर्णतां मलिनतामधिगता प्राप्ता सती तमसा राहुणा, "तमस्तु राहुः स्वर्भानुः"

इत्यमरः, समाच्छादिता तिरोहिता भास्करद्युतिः सूर्यप्रभा यस्यां तस्या दिनश्रियो दिवसश्रियस्तुल्यदशां सदृशावस्थामशिश्रियदाश्रितवती। सूर्योपराग इवाप्रकाशाभूदित्यर्थः ॥ ३६ ॥

त्रयीविनाशेन तदेकसम्भवा
खिलीबभूवाखिलधर्मपद्धतिः।
विरुग्णमूला विततापि वल्लरी
विशुष्यति द्रागिति विश्रुतं खलु ॥ ३७ ॥

त्रयीति। त्रयीनां वेदानां विनाशेन हेतुना। तदेकसम्भवा सैकः सम्भव उत्पत्तिस्थानं यस्यास्तादृशी, अखिला निश्शेषा धर्मपद्धतिः धर्ममार्गः खिलीबभूवाप्रहताभूत्। 'द्वे खिलाप्रहते समे' इत्यमरः। वेदविनाशाद्वेदमूलस्य धर्ममार्गस्यापि विनाशे दृष्टान्तमाह—वल्लरी लता विततापि आश्रयवृक्षस्य सर्वशाखासु व्याप्तापि विरुग्णमूला खण्डितमूला सती द्राक् क्षिप्रं विशुष्यति विशेषेण शुष्का भवतीति यद्वस्तु तद्विश्रुतम्। खलु प्रसिद्धमेव। तद्वदित्युपमेयार्थतः ॥ ३७ ॥

विनापि मन्त्रैर्विधिराऽऽराध यं
विविक्तया भावनयैव शूद्रवत्।
अजस्रमन्तश्च बहिश्च देहिना-
मनादिमध्यान्तदशश्चकास्ति यः ॥ ३८ ॥

विनेति। यो देहिनां शरीरिणामजस्रमनवरतमन्तश्च बहिश्च चकास्ति जीवात्मपरमात्मतया सर्वव्याप्तो विद्यते। कीदृशः। अनादिमध्यान्तदशः जन्मवृद्धिविनाशात्मकावस्थात्रयरहितः। आदिदशया मध्यदशयान्तदशया रहितोऽनादिमध्यान्तदशः, तथाभूतो महाविष्णुरित्येवोक्तं भवति। तं तादृशप्रभावं मन्त्रैर्विनापि, वेदा एव हि मन्त्राः तद्वि(दा।ना)शान्मन्त्रोच्चारणरहितम्। विधिर्ब्रह्मा शूद्रवत् शूद्र इव। तस्य मन्त्रोच्चारेऽनधिकाराद् भक्तिरेव साधनमीश्वराराधनस्य। तद्वत्, विविक्तया विशुद्धया भावनया भक्त्यैवाऽऽराध आराद्धवान्। जगत्साक्षी प्रसीदतु महाविष्णुरिति ध्यातवानित्यर्थः ॥ ३८ ॥

अथ मत्स्यावतारं (प्रास ? प्रस्ता)वयन्नाह—

तदा कदाचिद् द्रमिलक्ष्मापतिः
कृती स सत्यव्रत इत्यभिश्रुतः ।
ऋषित्वमाप्तो दृढया तपस्यया
वनादयासीत् सवनाय निम्नगाम् ॥ ३९ ॥

तदेति । तदा तस्मिन् काले कदाचित् सत्यव्रत इति अभिश्रुतः प्रसिद्धः द्रमिलक्ष्मायाः द्रमिलराज्यस्य पतिः प्रभुः कृती विद्वान् दृढया निश्चलया तपस्यया तपसा ऋषित्वमाप्तस्तपोधनत्वं प्राप्तः स राजर्षिः सवनाय स्नानार्थं वनात् निम्नगां नदीमयासीत् प्राप्तवान् ॥ ३९ ॥

निमज्य तस्यां नियतात्मनो मुने-
र्निजान् पितॄंस्तर्पयतो धृताम्भसि ।
कराञ्जलौ कश्चन मत्स्यपोतकः
समुल्ललासाब्ज इवारुणातपः ॥ ४० ॥

निमज्येति । तस्यां निम्नगायां निमज्य स्नात्वा नियतात्मनो निरुद्ध-बहिर्व्यापारमनसः, निश्चलहृदयस्येति यावत् । निजानात्मीयान् पितॄं-स्तर्पयतः पितृतर्पणं कुर्वतो मुनेः सत्यव्रतमहर्षेः धृताम्भसि धृतजले कराञ्जलौ संहतकरतलद्वयसंपुटे कश्चन मत्स्यपोतको मत्स्यशिशुः समुल्ललास शुशुभे । अब्जे पङ्कजोदरे अरुणातपो बालातप इव । अनयोप( मै ? मयै)वारुणवर्णतास्य मत्स्यशिशोरुक्ता ॥ ४० ॥

ससंभ्रमं तेन समुज्झितो जले
यदा स नापासृपदन्यतो झषः ।
तदा तमादाय दयालुनामुना
शनैरुपानीयत कुण्डिकोदरम् ॥ ४१ ॥

ससंभ्रमेति । तेन मुनिना ससंभ्रमं सवेगं जले समुज्झित-स्त्यक्तः स झषो मत्स्यशिशुर्यदा यस्मिन् कालेऽन्यतोऽन्यत्र प्रदेशे नापासृपत् न गतवान्, क्षिप्तस्थान एव स्थितवानित्यर्थः, तदा तस्मिन् काले दया-लुना कृपाशालिनामुना मुनिना शनैर्मन्दमन्दं कुण्डिकोदरं जलपात्रस्यान्तर्भागं (उपानीयत) प्रवेशित इत्यर्थः ॥ ४१ ॥

अमान्तमस्मिन् पुनरेनमक्षिपद्
घटस्य कुक्षौ बृहतो महीपतिः ।
अहो मुनेरप्यसमीक्ष्यकारिता
पिधित्सितो येन पटेन पावकः ॥ ४२ ॥

अमान्तमिति । महीपतिः सत्यव्रतमुनिरस्मिन् कुण्डिकोदरे अमान्तमपरिच्छिन्नं पुनरेनं झषं बृहतः पृथोर्घटस्य कुक्षावुदरेऽक्षिपत् निहितवान् । क्रमप्रवृद्धशरीरत्वात् कुण्डिकोदरगस्य न पर्याप्तं स्थातुमिति तत उद्धृत्य महाघटगर्भे प्रावेशयदेनमित्यर्थः । ब्रह्माण्डकुक्षावप्यपरिच्छिन्नस्यास्य घटकुक्षिव्यवच्छेद्यतामिच्छतो मुनेर्मोहमुत्प्रेक्ष्य कविश्चमत्करोति अहो इति । मुनेरपि दिव्यचक्षुषोऽप्यसमीक्ष्यकारिता साहसिक्यम् अहो आश्चर्यम् । अविवेकितोपज्ञमिदमित्यर्थः । येन मुनिना पावकोऽग्निः पटेन वस्त्रेण (पिधित्सितः पिधातुं इष्टः । अग्निं वस्त्रेण) यः छादयति स वैनं क्वापि व्यवच्छिनत्तीति सदृशयोर्वाक्यार्थयोरैक्यारोपान्निदर्शनालङ्कारः ॥ ४२ ॥

स दिव्यमत्स्यस्तरसाथ्रूबराथा
यथान्धुकासारतरङ्गिणीष्वमान् ।
क्षयाय संक्षुभ्नाति तेन योगिना
कथञ्चिदक्षिप्यत वारि वारिधेः ॥ ४३ ॥

... ... ... ... ... ... ... ... ...

.... .... नदीष्वप्यमान् अपरिच्छिन्नः सन् "पुंस्येवान्धुः प्रहिः कूपः" इत्यमरः । "तटाकोऽस्त्री कासारः" "तरङ्गिणी शैवलिनी" इत्यमरः । योगिना योगाभ्यासलब्धाणिमाद्यैश्वर्यशालिना तेन सत्यव्रतमुनिना वारिधेः समुद्रस्य क्षयाय प्रलयं प्रवर्तयितुं संक्षुभ्नति संक्षोभं प्राप्नुवति वारि (धेः) जले कथञ्चिद्यत्नेनाक्षिप्यत क्षिप्तः । अन्धवादिष्वमान्तमेनं कथं मुनिरुद्धृतवानित्याशङ्कापरिहाराय योगिनेति विशेषणमुक्तम् । योगिभिः किं दुर्वहं नामेति भावः । तादृशेनापि यत्नेनैवासावुद्धृत इत्यहो अस्य महत्त्वमिति द्योतितम् ॥

विषाणदण्डाग्रविदीर्णयादसा
विवर्तनोत्कूलितसागराम्भसा ।
अधःकृताद्रिप्रवरेण वर्ष्मणा
क्षणादिवाशाः स्थगयांबभूव सः ॥ ४४ ॥

विषाणेति । स दिव्यमत्स्यो विषाण(दण्डस्य) दण्डवत् स्थूलदीर्घस्य शृङ्गस्याग्रेण प्रान्तेन विदीर्णानि शकलितानि यादांसि जलजन्तवो येन । विवर्तनेन भ्रमणेन हेतुना उत्कूलितम् । कूलमतिक्रान्तमुत्कूलितम् । तथाकृतं सागराम्भः समुद्रजलं येन । अधःकृतो न्यक्कृतोऽद्रिप्रवरो महामेरुर्येन । तादृशेन वर्ष्मणा वपुषा, प्रमाणेन वा । 'वपुःप्रमाणयोर्वर्ष्म' इति वचनात् । क्षणादिव क्षणेनैवाशा दिशः स्थगयांबभूव आच्छादितवान् । समुद्रे दश दिशोऽपि समावृणोदित्यर्थः ॥ ४४ ॥

अथैनमत्यद्भुतमत्स्यविग्रहं
विवेद विष्णुं द्रमिलावनीपतिः ।
अलौकिकं वस्त्वबुधोऽपि तत्त्वतो
विवेक्तुमीष्टे किमुतात्मवेदिनः ॥ ४५ ॥

अथेति । (द्रमिलावनीपतिः) सत्यव्रतमुनिः अत्यद्भुतमत्स्यविग्रहमति-शयेनाश्चर्यभूतमत्स्यशरीरमेनं विष्णुं विवेद ज्ञातवान् । विष्णुरेवैष मत्स्य-शरीरेणागत इति परमार्थतया विदितवानित्यर्थः । कथं विदितवानित्याशङ्का-मर्थान्तरन्यासेन परिहरति । अबुधोऽप्यज्ञोऽपि अलौकिकं लोकातिशायि वस्तु लोके सामान्येन दृश्यमाना(द्) विशिष्टतया दृष्टं वस्तु तत्त्वतः परमार्थतो विवेक्तुं विचारयितुमीष्टे समर्थो भवति ; किमुत किं पुनरात्मवेदिन आत्मज्ञाः । आत्मतत्त्ववेदिनो जना इदं परमार्थेन जानन्तीति किमाश्चर्यमित्यर्थः ॥ ४५ ॥

नमन्नसावस्तुत वस्तुतो भवा-
नवेदि वेदोद्धरणोद्यतो मया ।
अनन्तरूपाय चराचरात्मक-
प्रपञ्चकर्त्रे भगवन् ! नमोऽस्तु ते ॥ ४६ ॥

नमन्निति । असौ सत्यव्रतमुनिर्नमन् कृतनमस्कारः सन् अस्तुत स्तुतवान् । स्तुतिप्रकारमाह — हे भगवन् ऐश्वर्यादिगुणशालिन् ! वेदाना-मुद्धरणे प्रत्याहरणे उद्यत उद्युक्तो भवान् मया वस्तुतः परमार्थतोऽवेदि विदितः । वेदोद्धरणाय प्रवृत्त इति ज्ञात इत्यर्थः । अनन्तरूपायानेकरूपग्राहिणे चराचरात्मकस्य जङ्गमस्थावररूपस्य प्रपञ्चस्य लोकस्य कर्त्रे निर्मात्रे ते नमोऽस्तु ॥

अविक्रियोऽपि प्रकृतिप्रपञ्चित-
प्रपञ्चसञ्चेतनहेतुतां भजन् ।

गुणानवष्टभ्य जगन्निधे ! भवान्
विभर्ति मूर्तीर्विविधप्रकारिकाः ॥ ४७ ॥

अविक्रिय इति । जगन्निधे! जगन्ति निधीयन्ते यस्मिन्निति अधिकरण-साधनो जगन्निधिशब्दः । यदाह :—

"(पर ? विर)मति महाकल्पे नाभीपद्मैकनिकेतन-
स्त्रिभुवनपुरः शिल्पी यस्य प्रतिक्षणमात्मभूः ।
किमधिकरणा कीदृक् कस्य व्यवस्थितिरित्यसा-
वुदरमविशद् द्रष्टुं तस्मै जगन्निधये नमः ॥"

इति । भवानविक्रियो विकाररहितोऽपि प्रकृत्या मायया प्रपञ्चितस्य विस्तारितस्य प्रपञ्चस्य जगतः सञ्चेतने चैतन्यापादने हेतुतां व्रजन् कारणत्वमधिगच्छन् । तदुक्तं प्रबोधचन्द्रोदये —

"तनोति विश्वेक्षितुरीक्षणेरिता
जगन्ति मायेश्वरतेयमीशितुः ॥"

इति । अथवा "प्रधानं प्रकृतिः स्त्रियाम्" इत्यमरवचनात् प्रकृतिरिति प्रधानमुच्यते । प्रधानाद्विश्वोत्पत्तिरिति केचिदाहुः । गुणान् सत्त्वरजस्तमांसि अवष्टभ्य आश्रित्य विविधप्रकारिकाः विरिञ्चिगिरिशाद्या नानाप्रकारा मूर्त्तीः शरीराणि विभर्ति धारयति । अविक्रिय इत्यनेन स्वयं निर्गुणः सन्नपि गुणावष्टम्भेन बहुविधशरीराण्याविष्करोति भवानित्यर्थः ॥ ४७ ॥

विगाह्य विश्वं प्रतिबिम्बकोटिभि-
र्भवान् विवस्वानिव वारिमण्डलम् ।
तनोति हि स्थूलदृशां शरीरिणां
पृथक्पृथक्त्वभ्रममात्मनो हरे ! ॥ ४८ ॥

विगाह्येति । हे हरे ! भवान् प्रतिबिम्बानां प्रतिकृतीनां कोटिभिः समूहैः । विश्वमशेषभुवनं विगाह्य प्रविश्य स्थूलदृशां विवेकबाह्यानां शरीरिणां देहभृताम् आत्मनः स्वस्य पृथक्पृथक्त्वभ्रमं प्रतिशरीरं भिन्नभिन्नः परमात्मेति भ्रान्तिं तनोति विस्तारयति । द्वैतबुद्धिमुत्पादयतीत्यर्थः । अत्रोप-

मामाह । विवस्वान् सूर्यो वारिमण्डलं कूपतटाकघटशरावादिनिष्ठामम्बुसन्ततिमिव । एकोऽपि विवस्वान् प्रतिजलाशयं प्रविष्टैः प्रतिबिम्बशतैर्बहुरूपतया यथा सम्भाव्यते तथैव भवानेकः परमात्मा सन्नपि प्रतिशरीरं जीवात्मतया भिन्न इव लक्ष्यत इत्यर्थः । स्थूलदृशामिति परमार्थतो विवेक्तुमसमर्थानाम् । परमार्थविचारे तु भवानेक एवेत्यवधातव्यं भवतीति तात्पर्यम् ॥ ४८ ॥

जना हयग्रीवमुदाहरन्ति यं
तमेव ते सोमकनामकं विदुः ।
अमुष्य ते द्वे अपि नामनी परं
भवानितः शेषयितुं प्रवर्तते ॥ ४९ ॥

जना इति । जना यमसुरं हयग्रीवमुदाहरन्ति वदन्ति तमेव तं हयग्रीवमेव ते जनाः सोमकनामकं सोमकासुरसंज्ञं विदुर्जानन्ति । अमुष्यासुरस्य परं केवलं ते द्वे नामनी अपि हयग्रीव इति सोमक इति च इतः परस्ताच्छेषयितुं शिष्टे कर्तुं भवान् प्रवर्तते प्रारभते । अमुं नामद्वयशेषीकर्तुं निग्रहीतुमित्यर्थः, भवानिदानीमुद्युक्त इति मया ज्ञात इति भावः ॥ ४९ ॥

उपस्थितोऽयं प्रलयो यदब्धयो
विलङ्घ्य मुद्रां मुहुरुच्चलन्त्यमी ।
तदेतदेकार्णवमीक्षितुं जगद्
जगत्पते ! वाञ्छति दास एष ते ॥ ५० ॥

उपेति । अयं प्रलयः कल्पावसानमुपस्थितः प्राप्तः । यद्यस्मात् कारणादमी अब्धयः समुद्रा मुद्रां सीमां विलङ्घ्यातिक्रम्य मुहुः पुनः पुनरुच्चलन्ति उद्गच्छन्ति । हे जगत्पते ! तस्मात् कारणादेष ते दासः तव किङ्करोऽहम् एतज्जगल्लोकम् एकार्णवमेकसमुद्रीभूतम् ईक्षितुं द्रष्टुं वाञ्छतीच्छति । तां मदिच्छां पूरयतु भवानित्यभिप्रायः ॥ ५० ॥

अथावदन्मत्स्यवपुर्धरो हरि-
स्तथास्तु सत्यव्रत सत्यवागसि ।
इह प्रतीक्षस्व च सप्त वासरान्
धरा तदा वारिणि मङ्क्षु मङ्क्ष्यति ॥ ५१ ॥

अथेति । तद्वचनानन्तरं मत्स्यवपुर्हरो मत्स्यरूपी हरिर्विष्णुरवदुक्तवान् । हे सत्यव्रत तथास्तु । यथा भवानिच्छति तथा भवतु । त्वं सप्त दिवसान् प्रतीक्षस्व प्रतिपालय । तदा तस्मिन् काले इतोऽष्टमे वासर इत्यर्थः । धरा भूमिर्वारिधि जले मङ्क्षु क्षिप्रं मङ्क्ष्यति मग्ना भविष्यति ॥ ५१ ॥

इति ब्रुवाणश्चलबाललोलिते
 ममज्ज वारां निलये महाझषः ।
समुच्चलन्ति स्म च सप्त सागरा
 नभस्पृशस्तुङ्गतरङ्गराशिभिः ॥ ५२ ॥

इतीति । महाझषो दिव्यमत्स्यः । इति ब्रुवाणो वदन् वारां निलये समुद्रे ममज्ज मग्नवान् । कीदृशे ? चलेन कम्पितेन बालेन लाङ्गूलेन लोलिते क्षोभिते । सप्त सागराश्च तुङ्गैरुच्छ्रितैस्तरङ्गराशिभिर्वीचिनिचयैः नभस्पृशः नभोऽम्बरं स्पृशन्तीति, "स्पृशोऽनुदके क्विन्" (३-२-५८) इति क्विन्प्रत्ययः, तथा सन्तः समुच्छलन्ति स्म समन्तात् प्रवर्धन्ते स्म ॥ ५२ ॥

समन्ततस्ते बृहदूर्मिमण्डली-
 कराञ्चलैस्ताडनचूर्णिताचलैः ।
मिथः स्पृशन्ति स्म सुहृत्समागम-
 प्रमोदहासायितफेनपङ्क्तयः ॥ ५३ ॥

समन्तत इति । ते समुद्राः समन्ततः परितः, बृहत्यो महत्य ऊर्मिमण्डल्यस्तरङ्गपङ्क्तय एव कराञ्चलानि हस्ताग्राणि तैः । कीदृशैः ? ताडनेन प्रहारेण चूर्णिताचलैः शकलितसर्वपर्वतैः । मिथोऽन्योन्यं स्पृशन्ति स्म स्पृष्टवन्तः । कीदृशाः समुद्राः ? सुहृदां बन्धूनां समागमे सम्मेलने यः प्रमोदो हर्षस्तत्र हासायिता हास इवाचरन्त्यः फेनपङ्क्तयो येषां तादृशाः । दूरप्रोषितानां सुहृदो यदृच्छया समागमे प्रहर्षेण हासः संभवत्येव ॥ ५३ ॥

निमग्नशैलालि निगीर्णभूतलं
 निरन्तरग्राहतिमिङ्गलाप्लुतम् ।
समाबभौ सप्तभिरेव वासरैः
 समस्तमेतत् सलिलात्मकं जगत् ॥ ५४ ॥

निमग्नेति । समस्तं निःशेषमेतद् जगद् भुवनं सप्तभिरेव वासरैः सलिलात्मकं जलस्वरूपम् , सलिलमयमित्यर्थः, सम्बभौ शुशुभे । कीदृशम् । निमग्नाः शैलाश्च पर्वतसमूहा यस्मिन् । निगीर्णं निमग्नं भूतलं यस्मिन् । निरन्तरैर्निबिडैर्ग्राहैर्नक्रैस्तिमिङ्गिलैर्मत्स्यविशेषैश्चावृतमाच्छादितम् । इदमुपलक्षण-मन्येषां च जलजन्तूनाम् ॥ ५४ ॥

सहैव सप्तर्षिभिरम्बुसन्ततौ
निमज्जनोन्मज्जनविह्वलीकृतम् ।
दधार भूमिर्द्रमिलेशमाञ्जया
हरेः स्वमूर्त्या किल नाव्यमानया ॥ ५५ ॥

सहेति । भूमिर्भूमिदेवी हरेर्मत्स्यरूपस्य विष्णोराज्ञया नियोगेन हेतुना नाव्यमानया नौरिवाचरतीति नाव्यमाना 'कर्तुः क्यङ्' (३-१-११) इति क्यङन्ताच्छानच् । 'वान्तो यि प्रत्यये' (६-१ ७९) इति वान्तादेशः । तया नौस्वरूपमाश्रयन्त्या स्वमूर्त्या स्वशरीरेण द्रमिलेशं सत्यव्रतं दधार धृतवती । किलेति प्रसिद्धौ । कीदृशम् । सप्तर्षिभिः सहैवाम्बुसन्ततौ जलसञ्चये निमज्ज-नोन्मज्जनाभ्यां कर्तृभ्यां विह्वलीकृतं परवशीकृतम् । तथाभूतमेनं नौरूपा भूमि-रात्मन्यारोप्य ररक्षेत्यर्थः ॥ ५५ ॥

अथोच्चकैरुच्चलदूर्मिसञ्चया-
दुदग्रशृङ्गाञ्चलचुम्बिताम्बरः ।
जलैकदेशादुदमज्जदण्डजः
प्रचण्डकण्ठारवभैरवाकृतिः ॥ ५६ ॥

अथेति । तद्धारणानन्तरम् उच्चकैरत्यर्थमुच्चलन्त ऊर्ध्वं प्लवन्त ऊर्मिसञ्चयास्तरङ्गपङ्क्तयो यस्य तादृशाद् जलैकदेशाज्जलस्यैकभागाद् अण्डजो हरिर्मत्स्यः उदमज्जद् उन्मग्नः उपरि प्रकाशित इत्यर्थः । कीदृशः । उदग्राभ्यामुन्नताभ्यां शृङ्गाञ्चलाभ्यां विषाणकोटिभ्यां चुम्बिताम्बरः स्पृष्टन-क्षत्रमार्गः । प्रचण्डोऽतिक्रूरः कण्ठारवो यस्याः सा च, अत एव भैरवा भयङ्करा चाकृतिः शरीरसंस्थानं यस्य । तथा सन्तुतिश्च(तः) इत्यर्थः ॥ ५६ ॥

सबुद्बुदोद्रिक्ततरङ्गकम्पिता
तदीयशृङ्गे तरणी निबध्य ते ।

अथेति । तद्वचनानन्तरं मत्स्यवपुर्द्धरो मत्स्यरूपी हरिर्विष्णुरवद-दुक्तवान् । हे सत्यव्रत तथास्तु । यथा भवानिच्छति तथा भवतु । त्वं सप्त दिवसान् प्रतीक्षस्व प्रतिपालय । तदा तस्मिन् काले इतोऽष्टमे वासर इत्यर्थः । धरा भूमिर्वारिणि जले मङ्क्षु क्षिप्रं मङ्क्ष्यति मग्ना भविष्यति ॥ ५१ ॥

इति ब्रुवाणश्चलबाललोलिते
ममज्ज वारां निलये महाझषः ।
समुच्छलन्ति स्म च सप्त सागरा
नभस्पृशस्तुङ्गतरङ्गराशिभिः ॥ ५२ ॥

इतीति । महाझषो दिव्यमत्स्यः । इति ब्रुवाणो वदन् वारां निलये समुद्रे ममज्ज मग्नवान् । कीदृशे । चलेन कम्पितेन बालेन लाङ्गूलेन लोलिते क्षोभिते । सप्त सागराश्च तुङ्गैरुच्छ्रितैस्तरङ्गराशिभिर्वीचिनिचयैः नभस्पृशः नभोऽम्बरं स्पृशन्तीति, "स्पृशोऽनुदके क्विन्" (३-२-५८) इति क्विन्प्रत्ययः, तथा सन्तः समुच्छलन्ति स्म समन्तात् प्रवर्धन्ते स्म ॥ ५२ ॥

समन्ततस्ते बृहदूर्मिमण्डली-
कराञ्चलैस्ताडनचूर्णिताचलैः ।
मिथः स्पृशन्ति स्म सुहृत्समागम-
प्रमोदहासायितफेनपङ्क्तयः ॥ ५३ ॥

समन्तत इति । ते समुद्राः समन्ततः परितः, बृहत्यो महत्य ऊर्मि-मण्डल्यस्तरङ्गपङ्क्तय एव कराञ्चलानि हस्ताग्राणि तैः । कीदृशैः । ताडनेन प्रहारेण चूर्णिताचलैः शकलितसर्वपर्वतैः । मिथोऽन्योन्यं स्पृशन्ति स्म स्पृष्ट-वन्तः । कीदृशाः समुद्राः । सुहृदां बन्धूनां समागमे सम्मेलने यः प्रमोदो हर्ष-स्तत्र हासायिता हास इवाचरन्त्यः फेनपङ्क्तयो येषां तादृशाः । दूरप्रोषितानां सुहृदो यदृच्छया समागमे प्रहर्षेण हासः संभवत्येव ॥ ५३ ॥

निमग्नशैलालि निगीर्णभूतलं
निरन्तरग्राहतिमिङ्गलाश्रितम् ।
समाबभौ सप्तभिरेव वासरैः
समस्तमेतत् सलिलात्मकं जगत् ॥ ५४ ॥

निमग्नेति । समस्तं निश्शेषमेतद् जगद् भुवनं सप्तभिरेव वासरैः सलिलात्मकं जलस्वरूपम्, सलिलमयमित्यर्थः, समाबभौ शुशुभे । कीदृशम् । निमग्नाः शैलाल्यः पर्वतसमूहा यस्मिन् । निगीर्णं निमग्नं भूतलं यस्मिन् । निरन्तरैर्निबिडैर्ग्राहैर्नक्रैस्तिमिङ्गलैर्मत्स्यविशेषैश्चावृतमाच्छादितम् । इदमुपलक्षणमन्येषां च जलजन्तूनाम् ॥ ५४ ॥

सहैव सप्तर्षिभिरम्बुसन्ततौ
निमज्जनोन्मज्जनविह्वलीकृतम् ।
दधार भूमिर्द्रमिलेशमाज्ञया
हरेः स्वमूर्त्या किल नाव्यमानया ॥ ५५ ॥

सहेति । भूमिर्भूमिदेवी हरेर्मत्स्यरूपस्य विष्णोराज्ञया नियोगेन हेतुना नाव्यमानया नौरिवाचरतीति नाव्यमाना 'कर्तुः क्यङ्' (३-१-११) इति क्यङन्ताच्छानच् । 'वान्तो यि प्रत्यये' (६-१-७९) इति वान्तादेशः । तया नौस्वरूपमाश्रयन्त्या स्वमूर्त्या स्वशरीरेण द्रमिलेशं सत्यव्रतं दधार धृतवती । किलेति प्रसिद्धौ । कीदृशम् । सप्तर्षिभिः सहैवाम्बुसन्ततौ जलसञ्चये निमज्जनोन्मज्जनाभ्यां कर्तृभ्यां विह्वलीकृतं परवशीकृतम् । तथाभूतमेनं नौरूपा भूमिरात्मन्यारोप्य ररक्षेत्यर्थः ॥ ५५ ॥

अथोच्चकैरुच्चलदूर्मिसञ्चया-
दुदग्रशृङ्गाञ्चलचुम्बिताम्बरः ।
जलैकदेशादुदमज्जदण्डजः
प्रचण्डकण्ठारवभैरवाकृतिः ॥ ५६ ॥

अथेति । तद्धारणानन्तरम् उच्चकैरत्यर्थमुच्चलन्त ऊर्ध्वं प्लवन्त ऊर्मिसञ्चयास्तरङ्गपङ्क्तयो यस्य तादृशाद् जलैकदेशाज्जलस्यैकभागाद् अण्डजो हरिर्मत्स्यः उदमज्जद् उन्मग्नः उपरि प्रकाशित इत्यर्थः । कीदृशः । उदग्राभ्यामुन्नताभ्यां शृङ्गाञ्चलाभ्यां विषाणकोटिभ्यां चुम्बिताम्बरः स्पृष्टनक्षत्रमार्गः । प्रचण्डोऽतिक्रूरः कण्ठारवो यस्याः सा च, अत एव भैरवा भयङ्करा चाकृतिः शरीरसंस्थानं यस्य । तथा सन्नुदस्थित(तस्थौ) इत्यर्थः ॥ ५६ ॥

तदुद्गमोद्भूतरङ्गकम्पितां
तदीयशृङ्गे तरणीं निबध्य ते ।

तदा तदाक्रान्तदिगन्तगामिन-
श्चिरं विजह्नुः सलिले मुनीश्वराः ॥ ५७ ॥

तदिति । तदा तदवसरे मुनीश्वराः सप्तर्षयः सत्यव्रतश्च ते तदीय-(स्यःशृङ्गे) मत्स्यशृंगे तरणीं निबध्य नावं बद्ध्वा । कीदृशीम् । तदुद्गमेन तस्य मत्स्यस्योद्गमेनोन्मज्जनेन हेतुनोद्रिक्तैरतिप्रवृद्धैस्तरङ्गैः कम्पितां (चि ? चलि)-ताम् । इदमेव बन्धनकारणम् । सलिले जलप्रपंञ्चे तदाक्रान्तान् तेन मत्स्ये-नाक्रान्तान् प्राप्तान् दिगन्तान् गन्तुं शीलमेषामिति तथा सन्तः, चिरं बहुकालं विजह्नुः क्रीडितवन्तः ॥ ५७ ॥

महाजवक्षुण्णमहीभृतोऽपि ते
समेत्य संवर्तसमीरणाः शनैः ।
विलोलतालव्यजनानिलोपमाः
सिषेविरेऽध्वश्रमलोपिनो मुनीन् ॥ ५८ ॥

महेति । महता जवेनातिवेगेन हेतुना क्षुण्णमहीभृतोऽपि चूर्णितपर्वता अपि ते तादृशः संवर्तसमीरणाः प्रलयमारुताः मुनीन् समेत्य विलोलस्य प्रचलि-तस्य तालव्यजनस्य तालवृन्तस्य येऽनिलास्तदुपमास्तत्सदृशाः सन्तः अत एवाध्वश्रमलोपिनो मार्गखेदमपनयन्तः शनैः मन्दं मन्दं सिषेविरे ॥ ५८ ॥

क्षयावसाने सति तापसानमू-
नमूढविज्ञानविशेषपावनान् ।
विसृज्य वैसारिणविग्रहो हरि-
स्ततो हयग्रीववधाय तत्वरे ॥ ५९ ॥

क्षयेति । क्षयावसाने प्रलयावधौ सति वैसारिणविग्रहो मत्स्यशरीरो हरिर्महाविष्णुः अमूढेनाप्रमादेन विज्ञानविशेषेण शास्त्रतत्त्वज्ञानातिशयेन पाव-नान् विशुद्धान् । अथवा (पाप?पावय)न्ति सर्वजनमिति पावनान् । अमूनीदृशान् तापसान् सत्यव्रतादीन् मुनीन् विसृज्य प्रस्थाप्य ततस्तदनन्तरं हयग्रीव-वधाय हयग्रीवं हन्तुं तत्वरे त्वरते स्म समुद्युक्तोऽभूदित्यर्थः ॥ ५९ ॥

जवानिलाधूतजलेन वर्त्मना

गवेषयंस्तत्र स वेदतस्करं
विलोकयामास च सोमकासुरम् ॥ ६० ॥

जवेति । स दिव्यमत्स्यः जवानिलेन वेगपवनेनाधूतजलेन कम्पितसलिलेन वर्त्मना मार्गेण रसातलं प्राप्य पातालं प्रविश्य भैरवं भयङ्करं यथा तथा ररास शब्दितवान् । उच्चैर्नादं कृतवान् । तत्र पाताले गवेषयन्नितस्ततोऽन्विच्छन् वेदतस्करं श्रुतिचोरं सोमकासुरं हयग्रीवं विलोकयामास दृष्टवान् ॥ ६० ॥

अपूर्वयादः कुत एतदागतं
बलादिहैनद् बलिशेन विध्यत ।
अयत्नलब्धं परिहास्त मामिषं
(जुषध्वमित्थं रुषेत्थमुक्त्वा) स जिघाय किङ्करान् ॥६१॥

अपूर्वेति । सः सोमकासुरः किङ्करान् भृत्यानसुरान् इत्थमेवंप्रकारं(उक्त्वा) रुषा कोपेन हेतुना जिघाय प्रेरितवान् । 'हेरचङि' (७-३-५६) इति कुत्वम् । किंप्रकारमुक्त्वेति चेदुक्तिप्रकारमाह । एतदपूर्वयादः अदृष्टपूर्वो जलजन्तुः कुतः कस्मात्प्रदेशादागतमिह प्राप्तः । एनद्यादो बलात् प्रसह्य बलिशेन मत्स्यवेधनसाधनेन विध्यत प्रहरत । अयत्नेनाप्रयासेन लब्धमधिगतमेनद् आमिषं भोग्यवस्तु मा परिहास्त मा परित्यजत । 'ओहाक् त्यागे' इत्यस्माल्लुङि मध्यमपुरुषबहुवचने रूपम् । 'न माङ्योगे'(६-४-७४)(इत्यडभावः)॥

*हयग्रीवस्तावत् प्रकटकटुकोपान्धतमसो
गदापाणुस्तस्थौ गतभयविवेकेन मनसा ।
असामान्यं वस्तु प्रसभमभिपश्यन् कथमयं
न चिन्तामाधत्त क्व पुनरथवासावविदुषाम् ॥ ६२ ॥

हयग्रीव इति । तावत्तदानीं प्रकटः प्रस्फुटः कटुकोपः क्रूरक्रोध एवान्धतमसं गाढान्धकारो यस्य । 'ध्वान्ते गाढेऽन्धतमसम्' इत्यमरः । स

---

*६१, ६२ अनयोर्मध्ये इदं पद्यं 'क' पाठे वर्तते—

उदायुधानुत्कटगर्वदुर्वहा-
नुपेयुषो दानववीरपूरुषान् ।
उदग्रशृङ्गाग्रनिकृत्तविग्रहां-
श्चकार भायामकरो महावपुः ॥

हयग्रीवो गदावान् गदासहितः । गतौ नष्टौ भयविवेकौ भीतिविचारौ यस्मा-त्तादृशेन मनसोपलक्षित उत्तस्थौ उत्थितवान् । युद्धार्थमिति शेषः । अयं हय-ग्रीवो असामान्यं सामान्येन दृश्यमानाद्विप्रतीपं वस्तु पदार्थमभिपश्यन्ना-भिमुख्येन विलोकयन् प्रसभं तत्क्षणमेव कथं न चिन्तामाधत्त । अयं कः स्यादिति विचारं कस्मान्न कृतवान् । अथवा अविदुषां मूढानामसौ चिन्ता क्व कुत्र वर्तते । अज्ञानां क्वापि विवेको न भवतीत्यर्थः ॥ ६२ ॥

सरभसमभिपत्य दैत्यराजः
कठिनविषाणविघट्टनप्रसृतैः ।
शिखिभिरपतमीकृताहिधाम्ना
हरिमकरं गदया समाजघान ॥ ६३ ॥

सरभसमिति । दैत्यराजो हयग्रीवः सरभसं सक्रोधमभिपत्याभिमुख्येन प्राप्य गदया हरिमकरं दिव्यमत्स्यं समाजघान प्रहृतवान् । कीदृश्या गदया । कठिने कर्कशे विषाणे हरिमकरस्य शृङ्गे यद् विघट्टनं समास्फालनं ततः प्रसृतैः प्रवृत्तैः, व्याप्तैरित्यर्थः । शिखिभिरग्निकणैरपतमीकृतं निरन्धकारीकृतमहिधाम पातालं यया तादृश्या ॥ ६३ ॥

मुरारिमकरो मुहुस्त्रुटनदुःस्थितास्थिच्छटा-
मृणालशकलाकुले रुधिरवारिभिः पूरिते ।
उरःसरसि वैरिणः स्फुटनिकृत्तचित्ताम्बुजे
निजं भृशममज्जयद् घनरुषा विषाणाञ्चलम् ॥६४॥

मुरारीति । मुरारिमकरो दिव्यमत्स्यो घनरुषातिक्रोधेन वैरिणो हयग्रीव-स्योरःसरसि तटाके निजमात्मीयं विषाणाञ्चलं शृङ्गाग्रं भृशमत्यर्थममज्जयत् मज्जितवान् । कीदृशे । मुहुः पुनः पुनः यत्त्रुटनं खण्डनं ततो हेतोर्दुःस्थिता व्याकुलीभूता अस्थ्नां छटाः समूहा एव मृणालशकलानि बिसशकलानि तैराकुले सहिते । रुधिरैः शोणितैरेव वारिभिः पूरिते । स्फुटं स्पष्टं निकृत्तं खण्डितं चित्तमेवांबुजं यस्मिंस्तथाभूत उरस्तटाके । शृङ्गाग्रं प्रवेशितवानिति शृङ्गाग्रप्रवे-शनेनैवं कृतवानित्यर्थः ॥ ६४ ॥

मत्स्यावतारकार्यमुपसंहरन्नाह—

दैत्यं ध्वान्तमिव प्रमथ्य मुषितां तेन त्रयीं वेधसो
वक्त्रैर्योजयति स्म यो दिनमुखे पद्मैरिवार्कः श्रियम् ।
स्वस्थानस्थितवासवादिविबुधश्रेणीसमाराधितो
मायामत्स्यवपुर्विवर्धयतु वः श्रेयांसि सोऽयं हरिः ॥ ६५ ॥

दैत्यमिति । यो हरिरर्कः सूर्यो ध्वान्तमन्धकारमिव दैत्यं हयग्रीवं प्रमथ्य निहत्य तेन मुषितां चोरितां त्रयीं वेदान् वेधसो ब्रह्मणो वक्त्रैर्मुखैर्योजयति स्म योजितवान् । दिनमुखे प्रभाते श्रियं प्रभां पद्मैः पङ्कजैरिवार्कः । अत्रापि तेनान्धकारेण मुषितां तिरस्कृतां श्रियमिति व्याख्येयम् । स्वस्थाने स्वर्गे स्थितया शत्रुविनाशाद्यथापुरमात्मस्थाने प्रतिष्ठां प्राप्तया वासवाद्या इन्द्रप्रमुखया विबुधश्रेण्या देवसमूहेन समाराधितः सम्यक् पूजितः । सोऽयं मायामत्स्यवपुः दिव्यमत्स्यरूपो हरिर्मायाविष्णुर्वो युष्माकं श्रेयांसि पुण्यानि विवर्धयतु पुष्णातु ॥ ६५ ॥

इति विष्णुविलासव्याख्यायां
विष्णुप्रियाख्यायां
प्रथमः सर्गः ।

काले तस्मिन्नप्सरःसंप्रदत्ता-
माबिभ्राणो हेमकल्हारमालाम् ।
स्वर्गोद्देशे सञ्चरिष्णुर्मुनीन्द्रः
श्रीदुर्वासा वासवं प्रेक्षते स्म ॥ १ ॥

काल इति । तस्मिन् काले पूर्वसर्गप्रस्तुतहयग्रीववधादनन्तरकाले श्रीदुर्वासा मुनीन्द्रः स्वर्गोद्देशे स्वर्गप्रदेशे सञ्चरिष्णुः सञ्चारशीलः । 'अलंकृञ्निराकृञ्' (२-३-१३६) इत्यादिना इष्णुच् । अनेनास्य सर्वत्र स्वच्छन्दसञ्चारशीलत्वमुक्तम् । तथा सन् वासवमिन्द्रं प्रेक्षते स्म दृष्टवान् । कीदृशः । अप्सरःसंप्रदत्तां देवस्त्रिया सम्यक्प्रतिपादितां हेमकल्हारमालां कनकसौगन्धिकमालाम् । "सौगन्धिकं तु कल्हारम्" इत्यमरः । आबिभ्राण आभरणत्वेन धारयन् । मुनेः स्वस्य पुष्पमालाधरणमनुचितमिति तदुचितपात्रे प्रतिपादनाभिलाषेण सञ्चार इति द्योतितम् ॥ १ ॥

एषा काचित् पुष्पमाला ममैनां
योषा काचिद्दत्तवत्यत्युदाराम् ।
तुभ्यं जिष्णो सम्प्रयच्छामि गच्छा-
मीत्थं दत्त्वा प्रस्थितस्तापसेन्द्रः ॥ २ ॥

एषेति । तापसेन्द्रो दुर्वासा हे जिष्णो देवेन्द्र एषा काचिदतिरमणीयत्वादीदृशीति वक्तुमशक्येति भावः, पुष्पमयी माला । दृश्यतामिति शेषः । अत्युदारामत्युत्कृष्टामेनां पुष्पमालां काचिद्योषा काचन स्वर्गस्त्रीः मम दत्तवती अर्पितवती । ममेति, न मह्यमिति । अतो ज्ञायते मदीयस्वत्वं न सञ्जातमस्या इति । तेन ममैतद्विषयं सम्प्रदानत्वं नास्तीति भावः । तुभ्यं सम्प्रयच्छामि प्रतिपादयामि । एनामित्यत्रापि योज्यम् । अत्र तु स्वत्वनिवृत्त्या परस्व(त्वा)पादनमुचितमिति कृत्वा तुभ्यमित्युक्तम् । अहं तु गच्छामि । तपस्विनामेकत्रैवाधिवासोऽनुचित इति भावः । इत्थमेवंप्रकारम् । उक्त्वेति शेषः । दत्त्वा प्रतिपाद्य । एनामित्यत्रापि । प्रस्थितः गतोऽभूत् ॥ २ ॥

इन्द्रो यावन्मस्तके हस्तिनस्तां
न्यस्तां कुर्वन् कुन्तलानाबबन्ध ।

हस्ती तावद् भृङ्गपातासहिष्णु-
र्व्याकृष्य द्राङ्मर्दयामास मालाम् ॥ ३ ॥

इन्द्र इति । (इन्द्रो) यावद् यस्मिन् काले तां मालां हस्तिनः ऐरावतस्य मस्तके शिरसि न्यस्तां निक्षिप्तां कृत्वा कुन्तलान् शिरोरुहानाबबन्ध संयमितवान् तावत् तस्मिन् काले हस्ती भृङ्गपातं मालापरिमलाकृष्टानां भ्रमराणां पतनोत्पतनमसहिष्णुरसहनशीलः सन् मालामाकृष्य शुण्डाग्रेण समाहृत्य द्राक् क्षिप्रं मर्दयामास द्रुमादिषु निक्षिप्य सञ्चूर्णयामास ॥ ३ ॥

दृष्ट्वा चैनां नागराजेन पिष्टां
रुष्टः शक्रं तापसेन्द्रः शशाप ।
आपित्सन्त्या आपदो दैवयोगा-
दल्पो हेतुः पुष्कलत्वं प्रयाति ॥ ४ ॥

दृष्ट्वेति । तापसेन्द्रश्च श्रीदुर्वासा नागराजेन ऐरावतेन पिष्टां मर्दितामेनां मालां दृष्ट्वा । गच्छन्नपि व्यावृत्यावलोक्य मालयासौ किं करोतीति ज्ञातुं पश्चान्निरीक्ष्येत्यर्थः । रुष्टः क्रुद्धः शक्रं शशाप शप्तवान् । उक्तमर्थं सामान्येन समर्थयति । दैवयोगाददृष्टवशाद् आपित्सन्त्या आपतितुमाशङ्कितायाः । 'आशङ्कायां सन् वक्तव्यः' इति सन् । आपदोऽनर्थस्याल्पो हेतुः स्वल्पमपि कारणं पुष्कलत्वं बृहत्त्वं प्रयातीति युज्यत एवायमर्थ इत्यर्थः ॥ ४ ॥

शापप्रकारमाह —

एवंप्राया दुर्लभा नेह माला-
स्तुच्छं यच्छत्येष ही तापसो नः ।
इत्थं मत्वा मत्तहस्तीन्द्रहस्ते
दत्त्वा वज्रिन् नूनमेनामहासीः ॥ ५ ॥

एवमिति । हे वज्रिन्, विशिष्टायुधसद्भावादतिदर्पशालिन्निति सम्बोधनार्थः । इह मत्प्रदेशे एवंप्राया एवंविधा माला न दुर्लभाः । दिव्यतरुबाहुल्यात् सुलभा एवेत्यर्थः । तापसस्तपस्वी एष नः अस्माकं तुच्छमत्यल्पं यच्छति ददाति । ही हास्यमिदम् । इत्थं एवंप्रकारं मत्वा त्वं मत्तस्य मदशालिनो हस्तीन्द्रस्यैरावतस्य हस्ते दत्त्वा एनां मालामहासीः त्यक्तवानसि । नूनं निश्चितमिदम् ॥ ५ ॥

श्लाघा स्वस्मिन्नन्यवर्गेष्ववज्ञा
तुल्येऽसूया वन्दनीयेषु निन्दा ।
द्वेषः साधौ दुर्जने पक्षपात-
श्चैते दोषा नोज्जहत्यर्थवन्तम् ॥ ६ ॥

श्लाघेति । स्वस्मिन्नात्मनि श्लाघा स्तुतिः । अन्यवर्गेषु स्वव्यतिरिक्तेष्ववज्ञा निन्दा । तुल्ये आत्मसदृशे जने असूया असहिष्णुत्वं; दोषारोपः । वन्दनीयेषु पूज्येषु निन्दा तिरस्कारः । साधौ सज्जने द्वेषो वैरम् । दुर्जने खलजने पक्षपातः स्नेहश्च । एते दोषा अर्थवन्तं धनवन्तं जनं नोज्जहति न त्यजन्ति । तेन सहैव सर्वदा वर्तन्त इत्यर्थः ॥ ६ ॥

धिक् तं मूढं चित्तसन्तोषवन्ध्ये
क्षिप्यत्यर्थं पुंसि यः क्लेशलब्धम् ।
क्षाराम्भोधौ वर्षतो वारिवाहा-
दन्यो मन्ये तस्य न स्यात् सगन्धः ॥ ७ ॥

धिगिति । यः पुरुषः क्लेशेन प्रयत्नेन प्राप्तमर्थं द्रव्यं चित्तसन्तोषः चित्ते सन्तोषगुणः

'अल्पलाभेऽपि या प्रीतिः सन्तोषः स उदाहृतः ।'

इति सन्तोषलक्षणम् । तेन वन्ध्ये शून्ये पुंसि,

'सर्वतस्तु समादित्सा लोभ इत्यभिधीयते ।'

इत्युक्तलक्षणलोभाक्रान्ते पुरुष इत्यर्थः । क्षिप्यति त्यजति । तं तादृशं मूढमज्ञं रुषा धिक्करोमि । न्यक्कारविषयः स पुमानित्यर्थः । तस्य पुरुषस्य क्षाराम्भोधौ लवणसमुद्रे वर्षतः वृष्टिं क्षिपतो वारिवाहान्मेघादन्यो व्यतिरिक्तः सगन्धः सब्रह्मचारी । सदृश इति यावत् । न भवेदित्यहं मन्य इति सम्बन्धः । क्षारजले पतितं शुद्धजलमपि क्षारत्वमेवापद्यते । तत्र वृथा त्याग एव शुद्धजलस्येत्यभिप्रायः ॥ ७ ॥

शापप्रकारानाह —

स्वर्गभ्रष्टो नष्टसर्वार्थसार्थो
जीर्णस्वाङ्गो धिक्कृतः शुक्रशिष्यैः ।
सार्धं देवैर्मर्त्यतुल्यस्त्वमेधि
क्रोधादेवं शक्रमूचे महर्षिः ॥ ८ ॥

स्वर्गेति । हे महेन्द्र ! त्वं स्वर्गात् स्वस्थानात् भ्रष्टः च्युतः, नष्ट-तिरोहितः सर्वार्थानां कल्पवृक्षकामधेनूच्चैःश्रवऐरावतादिसकलपदार्थानां सार्थं समूहो यस्य तथा सन्, जीर्णानि जरायुक्तानि स्वाङ्गानि स्वावयवा यस्य तथा च सन्, शुक्रशिष्यैरसुरैर्धिक्कृतो न्यक्कृतः देवैः सार्धं मर्त्यतुल्यो मानुष-सदृश एव भव । मृतिजननजरावैरूप्यादिमर्त्यधर्मयुक्तो भवेत्यर्थः । एवमुक्त-प्रकारं महर्षिः दुर्वासाः क्रोधाद्धेतोः शक्रमूचे इन्द्रं प्रति शापवचनमुक्तवान् ॥ ८ ॥

संभ्रान्तोऽथ प्राप्य जम्भारिरस्य
प्रीयस्वेति प्राणमत् पादमूले ।
प्रीतस्तावद्वीतकोपः स चाभू-
दह्नि क्षान्ते सूर्यकान्तः सुशीतः ॥ ९ ॥

संभ्रान्त इति । अथ शापानन्तरं जम्भारिरिन्द्रः सम्भ्रान्तो व्याकुलः सन् प्रीयस्व हे मुने ! प्रीतो भवेति वदन् प्राप्य समीपं गत्वास्य दुर्वाससः पादमूले चरणसमीपे प्राणमत् प्रणतवान् । स च श्रीदुर्वासाश्च तावत्तदानीं वीतकोपः शान्तक्रोधः प्रीतः सन्तुष्ट आसीत् । क्रोधशमनानन्तरमेव प्रीतत्वे दृष्टान्तमाह । अह्नि क्षान्ते दिवसे परिणते सति सूर्यकान्तः सुतरां शीतः सुखस्पर्शः स्वभावास्थितो भवति । सूर्यप्रतापे शान्ते स्वस्याग्न्युद्गिरणमपि प्रशाम्यति । तद्वत् क्रोधशान्तौ स्वभावसन्तोष एवास्याविरभूदित्यर्थः ॥ ९ ॥

युष्माकं भोः साधुपीयूषपाना-
न्निश्रीकत्वं सर्वमेतद् व्यपेयात् ।
इत्थं दत्त्वा शापमोक्षं सुरेभ्य-
स्तत्रैवायं तापसेन्द्रस्तिरोऽभूत् ॥ १० ॥

युष्माकम् इति । भो महेन्द्र ! साधु सम्यक् पीयूषपानादमृतपानाद्धेतो-र्युष्माकं भवतां निश्रीकत्वं स्वर्गश्रिया रहितत्वं सर्वं निरशेषमेव व्यपेयाद् व्यपगतं भविष्यति । सश्रीका एव भवन्तो भविष्यन्तीत्यर्थः । इत्थमेवंप्रकारं सुरेभ्य इन्द्रादिभ्यः शापमोक्षं शापप्रतीकारं दत्त्वायं तापसेन्द्रः श्रीदुर्वासास्तत्रैव अस्मिन् प्रदेश एव तिरोभूदन्तर्हितः ॥ १० ॥

वीतश्रीका विप्रहीणप्रभावा
देवाः सर्वे सत्रपा वृत्रहाद्याः ।
सार्धं गत्वा शम्भुना ब्रह्मणा च
क्षीराम्भोधौ तुष्टुवुः पद्मनाभम् ॥ ११ ॥

वीतेति । वीतश्रीका विगतैश्वर्या विप्रहीणप्रभावा विरहिता(नि ? णिम)महिमादिप्रभावाः । प्रभावं दिव्यत्वं तद्रहिता इत्यर्थः । अत एव सत्रपा लज्जासहिता वृत्रहाद्या इन्द्रप्रधानाः सर्वे देवाः शम्भुना परमेश्वरेण ब्रह्मणा विरिञ्चेन च सार्धं गत्वा क्षीराम्भोधौ दुग्धसिन्धौ, स्थिता इति शेषः । पद्मनाभं महाविष्णुं तुष्टुवुः स्तोत्राक्षरैः स्तु(त)वन्तः ॥ ११ ॥

स्तुतिप्रकारमाह —

विश्वेषां यो विष्टपानाममीषां
कर्ता भर्ता किं च हर्तासि भूमन् ।
त्रैगुण्येन त्रीणि रूपाणि भर्त्रे
तादृग्भूतस्फीतधाम्ने नमस्ते ॥ १२ ॥

विश्वेषामिति । हे भूमन् प्रभिन्ना विश्वख्यात ! यस्त्वं दृश्यमानानां विश्वेषां सर्वेषां विष्टपानां भुवनानां कर्तासि सृष्टिकारणमसि । किं च अपि च भर्तासि पालयितासि । हर्तासि संहारकृदसि । त्रयाणां गुणानां समाहारस्त्रैगुण्यं; रजःसत्त्वतमांसि गुणाः । तेन कारणेन त्रीणि रूपाणि ब्रह्मविष्णुपरमेश्वरव्यपदेशानि भर्त्रे भरणशीलाय । ताच्छील्यार्थे तृन् । 'न लोक' (२-३-६९) इति षष्ठीप्रतिषेधः । तादृग्भूतं तथाभूतं स्फीतं प्रभूतं धाम तेजो यस्य । तस्मै ते तुभ्यं नमः प्रह्वत्वमस्तु ॥ १२ ॥

वीक्षामात्रे यस्य विश्वभ्रमाणां
कल्पापायं यावदुत्पादयित्री ।
माया भूरि व्यातनोतीन्द्रजालं
तस्मै सम्यक् संविदात्मन् नमस्ते ॥ १३ ॥

वीक्षेति । हे संविदात्मन्! संविद् ज्ञानं तदेवात्मा स्वरूपं यस्य । ज्ञानरूपं निष्कलब्रह्मेत्यर्थः । हे निष्कलब्रह्मन् ते तुभ्यं सम्यग् नमः । श्रद्धानुगतत्वात् सम्यक् समीचीनं प्रह्वत्वं करोमीत्यर्थः । कीदृशाय तस्मै । तथाभूताय । किं तथाभूतत्वम् । अत्र यस्य ब्रह्मणो वीक्षामात्रे अनभिप्रायेऽवलोकन-

मात्रे सति कल्पापायं यावत् प्रलयपर्यन्तं विश्वेषां भ्रमाणां भ्रान्तीनामुत्पादयित्री जनयित्री । अथवा विश्वानि भुवनानि सन्तीति मिथ्यारूपां भ्रान्तिं द्वैतभ्रममुपजनयन्ती माया प्रकृतिः भूरि प्रभूतं नानाप्रकारमिन्द्रजालं व्यातनोति विस्तारयति । यथेन्द्रजालिकः पिञ्छिकाभ्रमणमात्रेणासद्वस्तु बहुविधं दर्शयति तथेत्यर्थः । तदुक्तम् —

"क्षेत्रज्ञस्य हि मायायामौदासीन्येन वीक्षणात् ।
मन उत्पद्यते तस्माज्जायते निखिलं जगत् ॥" इति ।

तस्मै तथाभूतमहिम्ने ते नम इति सम्बन्धः ॥ १३ ॥

एवं निष्कलत्वमुक्त्वा सकलत्वेन कुलकवृत्त्या पञ्चभिः श्लोकैः स्तौति—

नानारत्नश्रेणिराजत्किरीट-
ज्योतिर्मालाबर्हिबर्हावतंसम् ।
कारुण्यार्द्रस्निग्धमुग्धाक्षिपात-
व्याधूतात्मासक्तभक्ताधिजातम् ॥ १४ ॥

गण्डालोलत्कुण्डलं चारुशारी-
तुण्डाभोगश्रीमदुत्तुङ्गघोणम् ।
दन्तश्रेणीशुभ्रकान्तिप्रवाह-
ज्योत्स्नोल्लासभ्राजदास्येन्दुबिम्बम् ॥ १५ ॥

कण्ठे राजत्कौस्तुभं वन्यमाला-
हारस्फारश्रीकदोरन्तरालम् ।
केयूराढ्यैः शङ्खचक्रादिचिह्नै-
र्बाहानालैः शोभमानं चतुर्भिः ॥ १६ ॥

चञ्चत्काञ्चीसञ्चयोदञ्च्यमान-
श्रोणीचक्रप्रस्फुरत्पीतचेलम् ।
मन्दक्रन्दन्मञ्जुमञ्जीरहंस-
द्वन्द्वासक्तव्यक्तपादारविन्दम् ॥ १७ ॥

संसेवाभिव्यग्रयोगीन्द्रसंसत्-
संसारार्तिध्वंसिपांसूज्ज्वलाङ्घ्रि ।
मेघश्यामं त्वद्वपुर्नः पुरस्ता-
दानन्दैकस्वादु तद् प्रादुरस्तु ॥ १८ ॥

नानेति । त्वद्वपुः नः पुरस्तात् प्रादुरस्त्विति पञ्चमश्लोकान्तेनान्वयः । कीदृशं त्वद्वपुरित्याकाङ्क्षायां विशेषणैर्विशिनष्टि । नानाभूताभिरनेकवर्णाभी रत्नानां श्रेणिभिः पङ्क्तिभिः राजतः शोभमानस्य किरीटस्य ज्योतिर्भाला प्रभासमूहः स एव बर्हिबर्हः मयूरशिखण्डः स एवावतंसः शिरोलङ्कारो यस्य । ज्योतिषां नानावर्णत्वान्मयूरशिखण्डतयारोपणम् । कारुण्यार्द्रेण कृपापयःसिक्तेन स्निग्धेन स्नेहयुक्तेन अत एव मुग्धेन मोहकरेणाक्षिप्रातेन कटाक्षेण व्याधूतं निराकृत-मात्मन्यासक्तानामनुरक्तानां भक्तानामाविजातं पीडासञ्चयो येन । गण्डयोः कपोलयोः आलोलन्ती कुण्डले यस्य । चारुः शोभमानः शारीतुण्डस्य शुकी-चञ्चोराभोगः संस्थानं तादृशश्रीभान् कान्तिमानुतुङ्गा उन्नता घोणा नासिका यस्य । दन्तश्रेणीनां दन्तपङ्क्तीनां शुभ्रो धवलः कान्तिप्रवाहः प्रभा-निष्यन्दः स एव ज्योत्स्नोल्लासश्चन्द्रिकाविभावः तेन भ्राजच्छोभमानमास्येन्दु-बिम्बम् इन्दुबिम्बसदृशमास्यं यस्य। आस्येन्दुबिम्बत्वारोपणमत्र दन्तप्रभाया ज्योत्स्नोल्लासत्वेनारोपणस्य कारणमिति परम्परितरूपकम् । कण्ठे राजच्छोभ-मानं कौस्तुभरत्नं यस्य । वन्यमालाहाराभ्यां वनमालामुक्तागुणाभ्यां स्फारश्रीकं प्रवृद्धप्रभं दोरन्तरालं वक्षःस्थलं यस्य । केयूरैरङ्गदैराढ्यैर्धनिकैः महाधनयुक्तै-रित्यर्थः । शङ्खचक्रादिः; आदिशब्देन गदापद्मे अपि गृह्येते । स एव चिह्नं लाञ्छनं येषां तैश्चतुर्भिर्बाहानालैः प्रशस्तबाहुभिः शोभमानम् । चञ्चता चञ्च-लेन काञ्चीसञ्चयेन मेखलाजालेन उदञ्च्यमाने पूज्यमाने शोभमाने इति यावत् । श्रोणिचक्रे कटीतटे प्रस्फुरत् प्रकाशमानं पीतचेलं पीताम्बरं यस्य । मन्दं यथा तथा क्रन्दच्छब्दायमानं मञ्जुमनोहरं मञ्जीरे पादकटके एव हंसद्वन्द्वं मराल-मिथुनं तेनासक्ते बद्धे पादारविन्दे अरविन्दसदृशौ पादौ यस्य । पादयोरर-विन्दत्वेनारोपणाद्धि मञ्जीरयोर्हंसद्वन्द्वरूपणम् । संसेवायां सम्यग्भजनेऽभि-व्यग्राया स्तत्पराया योगीन्द्रसंसदः अष्टाङ्गयोगाभ्यसनपूर्वकतपश्चर्यानिरतानां समायाः, समूहस्येति यावत्, या संसारार्तिर्जननमरणदुःखं तां ध्वंसितुं निराकर्तुं शीलमेषामिति संसारार्तिध्वंसिभिः पांसुभिः परागैरुज्ज्वलौ शोभमाना-

1. 'तद्वपुः' इति पाठान्तरम् ।

वङ्घ्री चरणौ यस्य । मेघवच्छ्यामं मेघवर्णम् । आनन्द एक एव स्वादुरास्वाद्यो रसो यस्य । तत्तादृशं त्वद्वपुस्तव शरीरं नोऽस्माकं पुरस्तादग्रभागे प्रादुरस्तु प्रकाशताम् । साक्षाद्भवत्विति प्रार्थनायां लोट् ॥ १८ ॥

एवंप्रायस्तोत्रवाचां सुराणा-
मग्रे साक्षाद्भूतवान् पीतवासाः ।
सान्द्रोल्लासं कूजतां सारसाना-
मारम्भेऽह्नस्तेजसामीशितेव ॥ १९ ॥

एवमिति । पीतवासाः पीताम्बरो महाविष्णुरेवंप्राया एवंप्रकाराः स्तोत्रवाचः स्तुतिवाक्यानि येषां तेषां सुराणामग्रे पुरोभागे साक्षाद्भूतवान् प्रत्यक्षीभूतः । अत्रोपमामाह—अह्नो दिवसस्यारम्भे उषसि तेजसामीशिता सूर्यः । सान्द्रोल्लासं सम्पूर्णोन्मेषं यथा भवति प्रभातागमजनितः प्रहर्ष उल्लासस्तथा कूजताम् अव्यक्तान् शब्दानुद्घोषयताम् । 'कूज अव्यक्तशब्दे' इति धातुः । सारसानां सरःसम्बन्धिनां पक्षिणामग्रे इव । प्रभातागमप्रहर्षजनिताव्यक्तशब्द-घोषस्तेषां स्तुतिरूपेणारोप्यत इति साधर्म्यम् ॥ १९ ॥

यत्पानादेवोद्भविन्त्याः सुधायाः
स्वादाभिज्ञाः सम्भवेयुर्निलिम्पाः ।
तादृङ्माधुर्याक्षरस्रङ्मनोज्ञा-
मूचे वाचं मन्दहासी मुकुन्दः ॥ २० ॥

यदिति । मुकुन्दो महाविष्णुर्मन्दहासी सन्, सुराणामभिप्रायज्ञानं मन्दहासहेतुः । वाचमूचे उक्तवान् । कीदृशीम् । तादृङ्माधुर्यधुराभिः तथाभूतमाधुर्यगुणाभिरक्षरस्रग्भिरक्षरपङ्क्तिभिर्मनोज्ञां मनोहराम् । तादृङ्माधुर्य-मित्येतद्यच्छब्देन समर्थयति—यत्पानादेव यस्याः वाचः पानादास्वादनाच्छ्रो-त्रेन्द्रियेणानुभवादेव हेतोर्निलिम्पा देवा उद्भविन्त्याः क्षीराब्धिमथने समुद्भवन्त्याः सुधायाः पीयूषस्य स्वादाभिज्ञा रसवेदिनः सम्भवेयुः । भगवद्वाचो माधुर्यस्या-नुभवेन क्षीराब्धावुत्पत्स्यमानायाः सुधाया माधुर्यमीदृशमिति ज्ञातवन्त इत्यर्थः । तादृशज्ञानमेषां यथा भवति तथा मधुरां वाचमूचे ॥ २० ॥

भगवद्वचनप्रकारमाह —

निर्विण्णत्वं निर्जरा उज्जहीत
ज्ञातोऽस्माभिर्युष्मदाशंसितोऽर्थः ।
विज्ञातार्था अर्थियाच्ञाक्षराणि
प्रायो नैव स्थूललक्षाः सहन्ते ॥ २१ ॥

निर्विण्णेति । हे निर्जरा देवाः, यूयं निर्विण्णत्वं निर्वेदशालित्वम् । गत्यन्तराभावात् सुखानुभवे विरागोऽत्र निर्वेदः । शोकशालित्वमिति यावत् । उज्जहीत त्यजत । 'ओहाक् त्यागे' इत्यस्माल्लोटि मध्यमपुरुषबहुवचने रूपम् । युष्माभिराशंसितः प्रार्थितोऽर्थः । अमृतमथनरूपोऽभिप्राय इत्यर्थः । सोऽस्माभिर्ज्ञातो विदितः । अकथनेनैवावगतम् ज्ञानसमयानन्तरमेवाभिप्रायपूरणमपि भविष्यतीत्याशयेनाह—स्थूललक्षा दानशीलाः 'स्युर्वदान्यस्थूललक्षदानशौण्डा बहुप्रदे' इत्यमरः । विज्ञातार्था अभिप्रायवेदिनः सन्तः प्रायो बाहुल्येनार्थिनां याचकानां याच्ञाक्षराणि याचनरूपाणि देहीत्यक्षराणि नैव सहन्ते न क्षमन्ते । यदाहुः—

"प्रापितेन चटुकाकुविडम्बं
लम्भितेन बहुयाचनलज्जाम् ।
अर्थिना यदघमर्जति दाता
तन्न लुम्पति विलम्ब्य ददानः ॥"

इति । हि यस्मात्तस्मादयाचतामेव भवतामभिप्रायः पूरयिष्यत इति भावः ॥ २१ ॥

दृष्टश्चासाविष्टसिद्धेरुपायः
स्पष्टं ब्रूमः क्लिष्टसाध्योऽयमर्थः ।
यद्वा यत्तु क्लेशलब्धं तदेव
स्थेम्नो भूम्ने यद्वदाम्नायलाभः ॥ २२ ॥

दृष्ट इति । इष्टस्यामृतपानस्य सिद्धेरुपायो दृष्टश्चासौ अस्माभिरेवमिति पर्यालोचित एव । स्पष्टं ब्रूमः प्रकाशमेव वदामः । किं निगूहनेनेत्यर्थः । अयमर्थः— समुद्रमथनरूपं प्रयोजनं क्लिष्टं क्लेशयुक्तं यथा भवति तथा साध्यः

साधयितुं शक्यः। महता क्लेशेन प्रयत्नेन विना न सिद्ध्यतीत्यर्थः। यद्वा अथवा यद्वस्तु क्लेशेन प्रयत्नेन लब्धं भवति तदेव वस्तु स्थेम्नः स्थिरत्वस्य भूम्ने समृद्ध्यै भवति। अत्र दृष्टान्तमाह—आम्नायलाभो वेदशास्त्राद्यधिगमो यद्वत्। यथा यावद्यावत् प्रयत्नेनाभ्यस्यते वेदशास्त्रादि तावत्तावद् दृढतरं भवति इति प्रसिद्धम्। अथवा 'क्लेशलब्धमधिकादरदं तु' इतिवत् क्लेशलब्धमेव दार्ढ्योपपत्तये भवतीत्यभिप्रायः॥ २२॥

आदौ तावद्दानवैरप्यमित्रै-
स्सन्धातव्यं स्वार्थसिद्ध्यै भवद्भिः।
द्वेष्टारोऽपि ह्यात्मपोषस्य हेतो
राश्रीयन्ते कोकिलैः काकलोकाः॥ २३॥

आदाविति। हे देवाः भवद्भिः आदौ तावत् प्रथममेव; तावच्छोत्रावधारणार्थः। अमित्रैर्वैरिभिरपि शत्रुभिरपि दानवैरसुरैः सह स्वार्थस्यामृतसंभवरूपकस्य सिद्ध्यै प्राप्त्यर्थं सन्धातव्यं सन्धिः कर्तव्यः। सान्धिर्नामान्योन्यमेलनरूपः प्रथमनयः। कथं शत्रुभिः सन्धीयत इति न विरन्तव्यमिति सनिदर्शनमाह—कोकिलैः परभृतैः कर्तृभिः काकलोकाः काकसमूहा द्वेष्टारोऽप्यात्मद्रोहिणोऽपि आत्मनः शरीरस्य, पोषस्य वृद्धेर्हेतोः शरीरपोषणनिमित्तमाश्रीयन्ते सेव्यन्ते। हि यस्मादर्थे।

'प्रागन्तरिक्षगमनात् स्वमपत्यजात-
मन्यैर्द्विजैः परभृताः खलु पोषयन्ति।'

इति प्रसिद्ध्यनुसारेयमुक्तिः॥ २३॥

शक्रप्रष्ठाः शुक्रशिष्यैः समेता
मन्थानार्थं म(न्थ्यन्द)रं कल्पयन्तः।
सर्पाधीशं वासुकिं पाशयन्तो
मथ्नीतेष्टप्राप्तये दुग्धसिन्धुम्॥ २४॥

शक्र इति। हे देवाः शक्र इन्द्रः प्रष्ठोऽग्रगामी येषाम्। 'प्रष्ठोऽग्रगामिनि' इति निपातितोऽयं प्रष्ठशब्दः। तादृशा यूयं शुक्रशिष्यैरसुरैः समेताः सहिताः;

मन्थानो मथनदण्डस्तदर्थं मन्दरपर्वतं कल्पयन्तः संपादयन्तः सन्तः । किञ्च सर्पाणामधीशं वासुकिं पाशयन्तः पाशं कुर्वन्तः । 'तत् करोति' इति णिच् । इष्टस्यामृतस्य प्राप्तये तदर्थं दुग्धसिन्धुं क्षीराब्धिं मथ्नीत विलोलयत । 'मथ विलोलने' इति क्र्यादि ॥ २४ ॥

एवं कृते स्वार्थसिद्धिः स्यान्न वेति न सन्देहः कार्य इत्याह—

निष्कृष्टोऽसावप्रमत्तैर्भवद्भिः
प्रज्ञोन्मेषेणेव मन्थाचलेन ।
द्राक् पीयूषं दर्शयिष्यत्यवश्यं
प्रत्यक्तत्त्वं वेदतन्त्रो यथा वा ॥ २५ ॥

निष्कृष्ट इति । असावब्धिः क्षीराब्धिः अप्रमत्तैः प्रमादरहितैर्भवद्भिर्मन्थाचलेन मन्दरेण करणभूतेन निष्कृष्टो नितरां कृष्टः प्रमथितः सन् द्राग् झटिति पीयूषं दर्शयिष्यति । अवश्यं निश्चितोऽयमर्थ इत्यर्थः । वेदानां तन्त्रः समूहः ऋग्यजुस्सामानि यथा प्रत्यक्तत्त्वं प्रतीचः परमात्मनस्तत्त्वं स्वरूपं दर्शयिष्यति प्रकाशयिष्यति तथेत्यर्थः । केन निष्कृष्ट इत्यत्राह प्रज्ञोन्मेषेणेति । प्रज्ञोन्मेषो बुद्धिविकाशस्तेन नितरां पर्यालोचितो वेदसमूहस्तावद्यथोपनिषत्तत्त्वं प्रकाशयति तद्वदिति संबन्धः ॥ २५ ॥

इत्थंवाचां दीधितीनामिवौघै-
र्देवश्रेणीमब्जवाटीमिवासौ ।
कृत्वा सद्यः प्रीतिफुल्लाननाब्जा-
मह्नां भर्तेवाब्जनाभस्तिरोभूत् ॥ २६ ॥

इत्थमिति । अह्नां भर्तेव सूर्य इवाब्जनाभः पद्मनाभो दीधितीनां रश्मीनामिव इत्थंवाचामेवंप्रकारवचसामोघैः सन्ततिभिरब्जवाटीं पद्मिनीमिव देवश्रेणीं देवसमूहं प्रीत्या प्रहर्षेण फुल्लानि विकासितानि आननाब्जानि अब्जसदृशान्याननानि यस्यास्तादृशीं कृत्वा तिरोभूदन्तर्हितवान् । अत्र 'शैलैरुच्चैरिवोदीच्यान्' इतिवत् सावयवोपमालङ्कारः । सूर्यसदृशो विष्णुः (रश्मि)सन्ततिसदृशैर्वचोभिः पद्मिनीसदृशीं देवसंहतिं प्रमोदोल्लासिताब्जसदृशवदनां कृत्वा तिरोहितवानित्यर्थः ॥ २६ ॥

इन्द्रोऽपि द्रागिन्द्रसेनाभिधानं
दैत्यश्रेष्ठं सान्त्वयामास साम्ना।
कार्यायत्ता नीतयो हि प्रकृत्या
रागद्वेषावाशु विस्मारयन्ति ॥ २७ ॥

इन्द्र इति। इन्द्रोऽपि द्राग् झटिति इन्द्रसेन इति नामान्तरं दैत्यश्रेष्ठं महाबलिम्। साम्ना सामोपायेन इच्छानुसरणव्यापारेण सान्त्वयामास वशीकृतवान्। ननु प्रकृत्या वैरिणि तस्मिन् कथं सामप्रयोगलाघवं कृतवानिति चेत्तत्राह कार्येत्यादिना। कार्यायत्ताः प्रयोजनाधीना नीतयो नयप्रयोगाः प्रकृत्या स्वभावेन रागद्वेषौ स्नेहवैरे आशु क्षिप्रं विस्मारयन्ति प्रमर्षयन्ति। रागिणो द्वेषिणोऽ(पि) प्रयोजनापेक्षायां सत्यां रागं द्वेषं च विस्मरन्त्येवेत्यर्थः। तदुक्तम् —

"मित्राणि शत्रुत्वमुपानयन्ती
मित्रत्वमप्यर्थवशाच्च शत्रून्।
नीतिर्नयत्यस्मृतपूर्ववृत्तं
जन्मान्तरं जीवित एव पुंसः ॥ इति ॥ २७ ॥

देवासुराणां सन्धानपूर्विकां प्रवृत्तिमुपन्यस्यति —

संभूयस्यद्देवदेवारिवृन्दं
बाहुस्थेम्ना दृप्तमप्यत्र जातम्।
व्योमोल्लङ्घिव्यायतोत्तुङ्गशृङ्गं
प्रत्युद्धर्तुं मन्दरं मन्दरंहः ॥ २८ ॥

सम्भूयस्यादिति। सम्भूयस्यत् सम्मिलितम्। सम्भूय(न् ? स्)शब्दस्य कण्ड्वादित्वाद्यक्। देवानां देवारीणां च वृन्दं समूहः कर्तृ बाहुस्थेम्ना बाहुबलेन दृप्तमहङ्कृतं सदपि अत्रास्मिन् समये मन्दरं प्रत्युद्धर्तुमुद्धर्तुं मन्दरंहः मतिहतवेगं जातम्। अत्र हेतुगर्भं विशेषणमाह — व्योमोल्लङ्घीनि अतिक्रान्तवियत्पथानि व्यायतानि विस्तीर्णान्युत्तुङ्गान्युन्नतानि शृङ्गाणि यस्य तादृशम्। पृथुतमत्वाद्देवदैत्यानां मिलितानामप्यशक्योद्धरणत्वमस्य संवृत्तमित्यर्थः ॥ २८ ॥

विष्वद्र्यग्भिस्तप्तहेमप्रकाशै-
रङ्गच्छायैर्दीपिताशावकाशः ।
विष्वक्सेनस्याज्ञया हर्तुमद्रिं
तत्रायातस्तत्क्षणं पक्षिराजः ॥ २९ ॥

विष्वद्र्यग् इति । तस्मिन्नेव क्षणे पक्षिराजो गरुडो विष्वक्सेनस्य विष्णो-राज्ञयाद्रिं मन्दरं हर्तुमानेतुं तत्र देवदानवसमाजे विष्वद्र्यग्भिः परितो व्याप्तैः (अङ्गच्छायैः) 'छाया बाहुल्ये' इति क्लीबत्वम् । दीपित आशावकाशो दिग्भागो येन तथा सन्नायात आगतवान् ॥ २९ ॥

उत्क्षिप्योच्चैः पक्षविक्षेपवात-
प्रक्षुण्णाधःस्थूलमूलानुषङ्गम् ।
क्षीराम्भोधावक्षिपद्वीचिमाला-
स्फालक्रन्दत्कन्दरं मन्दरं सः ॥ ३० ॥

उत्क्षिप्येति । स च पक्षिराजो मन्दरं पक्षयोर्निजगरुतोर्विक्षेपवातैर्वि-विधसमास्फालनजनितैरनिलैः प्रक्षुण्णः खण्डितोऽधोभागे स्थूलानां पृथूनां मूलानामनुषङ्गः संम्बन्धो यस्य तथा कुर्वन् । उच्चैरुत्क्षिप्योद्धृत्य क्षीराम्भो-धावक्षिपत् क्षिप्तवान् । तत्कालविशेषमाह — वीचिमालानां तरङ्गावलीना-मास्फालेन प्रहारेण क्रन्दन्त्यः शब्दायमानाः कन्दरा गुहा यस्य । तथा सन्तमक्षिपदिति सम्बन्धः ॥ ३० ॥

वासुकिसमानयनमपि संक्षेपेणाह —

शम्भोः पाणावर्धभूषायमाणः
शेते योऽसौ वासुकिः सोऽपि तावत् ।
तादृक्स्थूले वेष्टमानस्त्रिरद्रौ
दृष्टः स्पष्टं शिष्टगात्रत्रिभागः ॥ ३१ ॥

शम्भोरिति । यो वासुकिः पूर्वं शम्भोः पाणौ परमेश्वरस्य प्रकोष्ठे अर्धभूषायमाणोऽर्धकटकमिवाचरन् शेते । सोऽपि तावच्चास्मिन् समये तादृक्-स्थूले तथाविधप्रथिम्नि अपरिच्छेद्यविस्तार इत्यर्थः । अद्रौ मन्दरे त्रिरभ्या-वृत्तित्रयेण त्रिगुणं वेष्टमानो वलयितशरीरः सन् स्पष्टं सर्वसमक्षं दृष्टः सर्व-

जैनेरिति शेषः । किञ्च शिष्टोऽवशेषितो गात्रस्य त्रिभागो भागत्रयं यस्य तथा सन् दृष्टः । गात्रदैर्घ्येण चतुर्धा विभक्ते सत्येकपादांशमेवैनाभिनद्धो वेष्टित इत्यर्थः ॥ ३१ ॥

पुच्छाकृष्टौ ह्रीमतः पूर्वदेवान्
　पूर्वं तस्य प्राहिणोत् पूर्वकाये ।
शिष्टानिष्टान् शिष्टभागे च विष्णुः
　स्वेच्छावाप्तिस्मेरवक्त्रारविन्दः ॥ ३२ ॥

पुच्छेति । विष्णुर्भगवान् पूर्वं प्रथमं तावत् पुच्छाकृष्टौ वासुकेः पुच्छभागं गृहीत्वा कर्षुं ह्रीमतो लज्जया पराङ्मुखान् पूर्वदेवान् दैत्यान् । वयं हि चिरन्तनदेवास्तादृशामस्माकमस्य पुच्छाकर्षणं महते लाघवायेति ततो निवृत्तानित्यर्थः । तस्य वासुकेः पूर्वकाये शिरोभागे ततोऽवशिष्टे पुच्छभागे (देवान्) च प्राहिणोत् । कीदृशः ? स्वेच्छाया निजाभिलषितस्यावाप्त्या लाभेन स्मेरं स्मयनशीलं वक्त्रारविन्दं यस्य तथा सन्निति सम्बन्धः । वासुकिवक्त्राद्विषोद्गारो भविष्यति, तेनेमे दैत्याः म्रियन्तां वा मूर्च्छन्तु वेति कृत्वा पूर्वकायादपवाहनमभिमतमेवेति भावः ॥ ३२ ॥

द्राघिष्ठं तं पन्नगश्रेष्ठपाशं
　व्याकर्षन्तः शैलपृष्ठावनद्धम् ।
क्षिप्तं तावत् क्षिप्तसर्वौषधिं ते
　क्षीराम्भोधिं देवदैत्या ममन्थुः ॥ ३३ ॥

द्राघिष्ठम् इति । ते सम्मिलिता देवदैत्या देवासुरा वासुकेः पुच्छभागे पूर्वकाये च नियुक्ताः शैलपृष्ठे मन्दरमध्ये अवनद्धं बद्धं द्राघिष्ठं दीर्घतरं तं; पन्नगश्रेष्ठो वासुकिस्तद्रूपं पाशं व्याकर्षन्तः (व्याक्षेपं) कुर्वन्तः सन्तः, तावत्तदानीं क्षिप्ता निहिता सर्वौषध्यो यस्मिंस्तथाभूतं क्षीराम्भोधिं ममन्थुः मथितवन्तः ॥ ३३ ॥

मङ्क्षु भ्राम्यन् मन्दराद्रिर्विरेजे
　स्तूर्णोद्गीर्णैः [illegible] ।
क्रोधान्नु स्वं मथ्नतो [illegible]
　[illegible]न्ति स्म क्षीरविस्तीर्ण[illegible] ॥ ३४ ॥

मङ्क्ष्विति । क्षीराणि धीयन्तेऽस्मिन्निति क्षीरधिः क्षीराब्धिः मङ्क्षु क्षिप्रं भ्राम्य(तः ? न्) पाशाकर्षणाद् द्रुततरं भ्रममाणस्य मन्दरस्यास्फालनेन तद्वदेव भ्रमन् जनितावर्त इत्यर्थः । अत एव तीरं लङ्घितुमतिक्रमितुं शीलमस्येति तीरलङ्घी । मन्दरेणाघूर्णितेभ्यश्चलितेभ्यो जलेभ्यस्तूर्णं त्वरितं उद्गीर्णा उद्गता स्फीताः प्रवृद्धाः फेना एवाट्टहासः प्रहासो यस्य तथा सन् वीचिहस्तैस्तरङ्गैरेव हस्तैः । स्वमात्मानं मथ्नतो देवासुरानाहन्ति स जघान । अत्रोत्प्रेक्षते । क्रोधान्विति वितर्के । उत्प्रेक्षाद्योतकोऽलायं निपातः । स्वमथनमसहमानोऽब्धिः सक्रोधाट्टहासः स्वहस्तैः स्वमाथकान् प्राहरदिवेत्युत्प्रेक्षा ॥ ३४ ॥

भूयोभूयस्ताड्यमानस्तरङ्गै-
धातुव्याजादुद्वमन् रक्तपूरम् ।
वाताध्मातप्रध्वनत्कन्दरत्वा-
च्चक्रन्देव स्पन्दवान् मन्दराद्रिः ॥ ३५ ॥

भूय इति । तरङ्गैः वीचिभिः करणैः भूयोभूयः पुनःपुनरपि ताड्यमान आहन्यमानः क्षीराब्धिनेति शेषः । स्पन्दवांश्चलनवान् मन्दराद्रिर्वातैर्जलपवनैराध्मातानि पूरितानि अत एव प्रध्वनन्ति शब्दायमानानि कन्दराणि गुहा यस्य, तस्य भावस्तत्त्वं तस्माद्धेतोश्चक्रन्देव क्रन्दितवानिव । धातवो मनःशिला(द)यस्तद्व्याजाद् धातुद्रवोद्गमच्छलेन रक्तपूरं शोणितप्रवाहमुद्वमन् उद्गिरन् । अयमेव रोदनस्य हेतुः । तरङ्गताडनमसहमान उच्चैःशब्दं रक्तमुद्वमन् क्रन्दितवानिवेत्युत्प्रेक्षा ॥ ३५ ॥

ऊर्ध्वोद्गच्छत्तुङ्गशृङ्गाश्चलोत्थै-
श्चक्रभ्रान्तौ मण्डलेनापतद्भिः ।
अप्युच्छिन्नैर्निर्झरीवारिवर्षै-
र्मुक्तालम्बिच्छत्रतामाप शैलः ॥ ३६ ॥

ऊर्ध्वेति । शैलो मन्दरः अप्युच्छिन्नैरपि भग्नैर्निरस्तैरित्यर्थः । निर्झरीणां वारिवर्षैर्जलधाराभिर्हेतुभिर्मुक्तालम्बिच्छत्रतामाप । मुक्तालम्बितं तु स्यूतमुक्ताफलावलम्बितं यच्छत्रं तत्तां तत्सदृशत्वमवाप्तवान् । कीदृशैर्वारिवर्षैः । ऊर्ध्वमुपरि(उद्)च्छतस्तुङ्गस्योन्नतस्य शृङ्गस्याचलादप्युत्थैरुद्गतैः चक्रभ्रान्तौ चक्रवद्भ्रमणे सति मण्डलेन मण्डलाकारेण समन्तादापतद्भिः । एकदिशा पतनेऽपि

भ्रमवशात् समन्ततो निरन्तरं निपतन्ति वारिधाराः । तेन मुक्ताच्छत्रसादृश्यम् । गिरेश्च दण्डसादृश्यम् ॥ ३६ ॥

**वेगोद्रेको दुर्वचाः सर्पपाश-**
**क्षिप्राकृष्टावुत्कटं भ्राम्यतोऽद्रेः ।**
**एकामाशामाश्रितं शृङ्गमस्य**
**प्रत्याशं यैनैककालं व्यलोकि ॥ ३७ ॥**

वेगेति । सर्पपाशस्य वासुकिरूपस्य पाशस्य क्षिप्राकृष्टौ सत्यां द्रुततरसमाकर्षणे सति उत्कटमत्यर्थं भ्राम्यतो भ्रमणकवद् भ्रमणं कुर्वतोऽद्रेर्मन्दरस्य वेगोद्रेको वेगातिशयो (दुर्वचाः । ये)न वेगोद्रेकेण हेतुनास्याद्रेरेकामाशामाश्रितं एकभागस्थितं शृङ्गं शिखरम् एककालमेकास्मिन्नेव काले प्रत्याशं व्यलोकि । सर्वासु दिक्ष्वपि दृष्टः । जनैरिति शेषः । एकक्षण एव समन्तादवस्थितमिवावलोक्यते स्मेत्यर्थः ॥ ३७ ॥

**विद्युन्मालाशालिभिर्नीलमेघै-**
**र्विष्वग्भ्रान्तैः सानुनि स्पृष्टमात्रे ।**
**श्यामक्षौमप्रोन्नतस्वर्णकाञ्ची-**
**दामोद्दामश्रीकतां प्रापितोऽद्रिः ॥ ३८ ॥**

विद्युद् इति । विद्युन्मालया तडित्समूहेन शालिभिः श्लाघ्यैर्नीलमेघैर्नवजलधरैः कर्तृभिः, सानुनि तस्य गिरेः प्रस्थभागे क्वचित् स्पृष्टमात्रे सति स्पर्शदशायामेव, विष्वग्भ्रान्तैः समन्ताद्भ्रमद्भिः पुर्वोक्तन्यायेन सर्वदिक्षु दृश्यमानैः श्यामक्षौमेन कृष्णवर्णदुकूलेन प्रोन्नतः प्रकर्षेणाच्छादितः परिधृतः; किञ्च स्वर्णकाञ्चीदाम्ना कनकमेखलाकलापेनोद्दामश्रीकश्चोत्कृष्टशोभश्च यो भवति तत्त्वं तत्साधर्म्यं प्रापितो नीतः। कृष्णपटं परिधाय तदुपरि कनकमेखलामलङ्कृतवतः कस्यचित्समाधिः ॥ ३८ ॥

**तुङ्गत्वाच्च श्वैतिमोद्रेकतश्च**
**न्यक्कुर्वाणैः सर्वशैलेन्द्रकूटान् ।**
**धाराधारा चन्द्रनक्षत्रा चुचुम्बे**
**दुग्धाम्भोधेरूर्मिसङ्घैर्नभश्रीः ॥ ३९ ॥**

तुङ्गेति । तुङ्गाम्भोभिः शीघ्रगैरूर्मिभिस्तरङ्गसमूहैर्नभश्रीश्चुचुम्बे संस्पृष्टा । दूरोत्सर्पत्प्रसारतया नभसः [illegible] श्लिष्टा इत्यर्थः । कीदृशैः । तुङ्गत्वादौन्नत्यात्, [illegible] शर्वशैलेन्द्रस्य कैलासस्य कूटान् शिखरान् [illegible] अतिशायिभिरित्यर्थः । कीदृशी नभश्रीः । ताराहारा नक्षत्रकञ्चुकमुक्तावली, चन्द्र एव वक्त्रं यस्यास्तादृशी च । ताराणां हारत्वेन चन्द्रस्य वक्त्रत्वेन च रूपणात् नभःश्रियो नायिकात्वेन ऊर्मिसङ्घस्य नायकत्वेन च [illegible] फलितमिति एकदेश(वि)वर्तिरूपकम् । अत्राप्रस्तुतार्थापेक्षया चुम्बकत्वसंयोग इति मुख्योऽर्थः । समासोक्तिरलङ्कारः ।

'समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत् ।' इति ॥ ३९ ॥

दूरक्लान्तेष्वद्रिमन्थाभिकृष्ट्या<br>
वृष्टिर्मेघैः पातिता दैवतेषु ।<br>
तुल्यायासेष्वन्यतो नासुरेषु<br>
स्वत्वैकाग्र्यं साध्वहो खेचराणाम् ॥ ४० ॥

दूरेति । अद्रिरेव मन्थो मथनदण्डस्तस्याभिकृष्ट्याभितः समाकर्षणेन हेतुना दूरक्लान्तेष्वत्यन्तश्रान्तेषु (दैवतेषु) देवसमूहेषु मेघैर्वृष्टिः पातिता । देवानामालस्यापनोदनाय मेघा ववृषुरित्यर्थः । अन्यतोऽन्यभागेषु तुल्यायासेषु देवैः सदृशालस्येषु । मन्थाकर्षणप्रयासस्य साधारणत्वात् । तादृशेष्वसुरेषु न पातिता वृष्टिः । तान् वर्जयित्वा देवान् वृष्ट्या तर्पयामासुरिति यत् तदिदं कविरुपहसति स्वत्वेति । खेचराणां गगनचारिणां स्वत्वे स्वकार्ये ऐकाग्र्यं तात्पर्यं साधु समीचीनम् । अहो कष्टमिति भावः । खे चरन्तीति खेषां देवानां च मिथः सौहार्दम् । अत एवं कृतवन्त इति परिहासाभिप्रायः ॥ ४० ॥

देवेष्वेको दैत्यवर्गेषु चैको<br>
मूर्तित्रय्याः पूरकोऽदृश्यतैकः ।<br>
एको निघ्नन् खेचरत्वे च विष्णुः<br>
सत्यं व्याप्तेर्वाचको विष्णुशब्दः ॥ ४१ ॥

देवेष्विति । विष्णुर्देवेष्वेकोऽन्यतमोऽदृश्यत पुरः स्वरूपमवलम्ब्याद्रिं कर्षन् कश्चिद्विष्णुरदृश्यत । तथा दैत्यानां वर्गेषु चैको भगवांस्तद्रूपोऽदृश्यत । एकः पुनर्मूर्तित्रय्याः पूरकोऽदृश्यत । येन विना मूर्तित्रयी न पूर्णा भवति । अत-

स्तरपूरकोऽपि विष्णुस्तत्राहश्यत । एकः शेषतल्पे फणिराजशयने निद्रन् स्वपन्। द्रार्धातोः शतरि रूपम् । तत्रापि शयानोऽहश्यत । अत इदं निश्चितमित्याह सत्यमिति । विष्णुरिति यः शब्दः स व्याप्त्यर्थस्यार्थस्य वाचक इति यत् तत् सत्यमेवेत्यर्थः । विष्लृ व्याप्ताविति धातुः । मुख्यया वृत्त्या तदर्थ एवायं विष्णुशब्द इतीदानीं निश्चितमिति भावः ॥ ४१ ॥

दातुं किञ्चिद्विश्रमं कर्षकेभ्य-
स्तादृग्दीर्घैर्बाहुदण्डैश्चतुर्भिः ।
स्वेनैवासौ वासुकिं व्याचकर्ष
श्लाघापात्रीभूय भूतेशधात्रोः ॥ ४२ ॥

दातुम् इति । असौ विष्णुः कर्षकेभ्यः कर्तरि ण्वुल् । देवासुरेभ्य इत्यर्थः । किञ्चिद्विश्रमं दातुमल्पमुच्छ्वासं सम्पादयितुं स्वेनैव स्वयमेव न त्वन्यसहायः, तादृग्दीर्घैस्तथाभूतद्राघिष्ठतया विश्वातिलङ्घिभिर्बाहुदण्डैर्वासुकिं व्याचकर्ष सर्पपाशाकर्षणं कृतवान् । कथम् । भूतेशधात्रोः शिवविरिञ्चयोः श्लाघापात्रीभूय श्लाघा स्तुतिस्तस्या विषयतां प्राप्य; वर्तमान इति शेषः । मूर्तित्रयेऽन्यतमयोरप्यावयोरसाध्यम् । तत्राप्ययं तामप्यधिगतवानित्यर्थः ॥ ४२ ॥

वर्गावेतौ तत्र पूर्वाधिकेन
प्रोत्साहेन व्याप्रियेतां स्वकृत्ये ।
आत्मक्लेशं जानतो भर्तुरग्रे
प्राणांश्चापि स्वैरमुज्झन्ति भृत्याः ॥ ४३ ॥

वर्गाविति । एतौ वर्गौ देवसङ्घोऽसुरसङ्घश्च तत्र स्वकृत्ये समुद्रमथनरूप आत्मकरणीये वस्तुनि पूर्वस्मादधिकेन प्रोत्साहेन व्याप्रियेतां व्यापारं कृतवन्तौ भगवदाकर्षणदर्शनात्तयोः पूर्वाधिकस्तदाकर्षणोत्साहोऽभूदित्यर्थः । उक्तमर्थान्तरन्यासेन समर्थयते । भृत्याः कर्मकराः आत्मक्लेशं स्वप्रयत्नं जानतः स्वामिनोऽर्थे प्रयोजने विषये प्राणांश्चापि निजजीवितमपि स्वैरं स्वच्छन्दं यथा भवति तथोज्झन्ति । किं पुनरन्यदिति भावः । तदुक्तम् —

'सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
संभावनागुणमवेहि तदीश्वराणाम् ।'

इति ॥ ४३ ॥

स्तत्पूरकोऽपि विष्णुस्तत्राद्दश्यत । एकः शेषतल्पे फणिराजशयने निद्रन् स्वपन्। द्राघीतोः शतरि रूपम् । तत्रापि भयानोऽद्दश्यत । अत इदं निश्चितमित्याह सत्यमिति । विष्णुरिति यः शब्दः स व्याप्तिरूपोऽस्यार्थस्य वाचक इति यत् तत् सत्यमेवेत्यर्थः । विष्लृ व्याप्ताविति धातुः । मुख्यया वृत्त्या तदर्थ एवायं विष्णुशब्द इतीदानीं निश्चितमिति भावः ॥ ४१ ॥

दातुं किञ्चिद्विश्रमं कर्षकेभ्य-
स्ताद्दग्दीर्घैर्बाहुदण्डैश्चतुर्भिः ।
स्वेनैवासौ वासुकिं व्याचकर्ष
श्लाघापात्रीभूय भूतेशधात्रोः ॥ ४२ ॥

दातुम् इति । असौ विष्णुः कर्षकेभ्यः कर्तरि ण्वुल् । देवासुरेभ्य इत्यर्थः । किञ्चिद्विश्रमं दातुमल्पमुच्छ्वासं सम्पादयितुं स्वेनैव स्वयमेव न त्वन्यसहायः, ताद्दग्दीर्घैस्तथाभूतद्राघिष्ठतया विश्वातिलङ्घिभिर्बाहुदण्डैर्वासुकिं व्याचकर्ष सर्पपाशाकर्षणं कृतवान् । कथम् । भूतेशधात्रोः शिवविरिञ्चयोः श्लाघापात्रीभूय श्लाघा स्तुतिस्तस्या विषयतां प्राप्य; वर्तमान इति शेषः । मूर्तित्रयेऽन्यतमयोरप्यावयोरसाध्यम् । तत्राप्ययं तामप्यधिगतवानित्यर्थः ॥ ४२ ॥

वर्गावेतौ तत्र पूर्वाधिकेन
प्रोत्साहेन व्याप्रियेतां स्वकृत्ये ।
आत्मक्लेशं जानतो भर्तुरग्रे
प्राणांश्चापि स्वैरमुज्झन्ति भृत्याः ॥ ४३ ॥

वर्गाविति । एतौ वर्गौ देवसङ्घोऽसुरसङ्घश्च तत्र स्वकृत्ये समुद्रमथनरूप आत्मकरणीये वस्तुनि पूर्वस्मादधिकेन प्रोत्साहेन व्याप्रियेतां व्यापारं कृतवन्तौ भगवदाकर्षणदर्शनात्तयोः पूर्वाधिकस्तदाकर्षणोत्साहोऽभूदित्यर्थः । उक्तमर्थान्तरन्यासेन समर्थयते । भृत्याः कर्मकराः आत्मक्लेशं स्वप्रयत्नं जानतः स्वामिनोऽर्थे प्रयोजने विषये प्राणांश्चापि निजजीवितमपि स्वैरं स्वच्छन्दं यथा भवति तथोज्झन्ति । किं पुनरन्यदिति भावः । तदुक्तम् —

'सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्यः
संभावनागुणमवेहि तदीश्वराणाम् ।'

इति ॥ ४३ ॥

तुङ्गैरिति । दुग्धाम्भोधेः क्षीराब्धेरूर्मिसङ्घैस्तरङ्गसमूहैर्नभश्रीश्चुचुम्बे संस्पृष्टा । दूरोत्क्षिप्ततरङ्गा नभसा संश्लिष्टा इत्यर्थः । कीदृशैः । तुङ्गत्वादौन्नत्यात्, धवलिम्ना सामर्थ्यं तस्योद्रिक्तोऽत्युत्कृष्टत्वाच्च शर्वशैलेन्द्रस्य कैलासस्य कूटान् शिखरान् न्यक्कुर्वाणैस्तिरस्कुर्वद्भिः । तदतिशायिभिरित्यर्थः । कीदृशी नभश्रीः । ताराहारा नक्षत्ररूपमुक्तागुणवती, चन्द्र एव वक्त्रं यस्यास्तादृशी च । ताराणां हारत्वेन चन्द्रस्य वक्त्रत्वेन च रूपणात् नभःश्रियो नायिकात्वेन ऊर्मिसङ्घस्य नायकत्वेन च रूपणमर्थवशात् फलितमिति एकदेश(वि)वर्तिरूपकम् । अत्राप्रस्तुतार्थापेक्षया चुम्बेर्वक्त्रसंयोग इति मुख्योऽर्थः । समासोक्तिरलङ्कारः ।

'समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत् ।' इति ॥ ३९ ॥

दूरक्लान्तेष्वद्रिमन्थाभिकृष्ट्या<br>
वृष्टिर्मेघैः पातिता दैवतेषु ।<br>
तुल्यायासेष्वन्यतो नासुरेषु<br>
स्वत्वैकाग्र्यं साध्वहो खेचराणाम् ॥ ४० ॥

दूरेति । अद्रिरेव मन्थो मथनदण्डस्तस्याभिकृष्ट्याभितः समाकर्षणेन हेतुना दूरक्लान्तेष्वत्यर्थमवसन्नेषु (दैवतेषु) देवसमूहेषु मेघैर्वृष्टिः पातिता । देवानामालस्यापनोदनाय मेघास्तेषु ववर्षुरित्यर्थः । अन्यतोऽन्यभागेषु तुल्यायासेषु देवैः सदृशालस्येषु । मन्थाकर्षणप्रयासस्य साधारणत्वात् । तादृशेष्वसुरेषु न पातिता वृष्टिः । तान् वर्जयित्वा देवान् वृष्ट्या तर्पयामासुरिति यत् तदिदं कविरपहसति स्वत्वेति । खेचराणां गगनचारिणां स्वत्वे स्वकार्ये ऐकाग्र्यं तात्पर्यं साधु समीचीनम् । अहो कष्टमिति भावः । खे चरन्तीति खेषां देवानां च मिथः सौहार्दम् । अत एवं कृतवन्त इति परिहासाभिप्रायः ॥ ४० ॥

देवेष्वेको दैत्यवर्गेषु चैको<br>
मूर्तित्रय्याः पूरकोऽदृश्यतैकः ।<br>
एको निद्रन् शेषतल्पे च विष्णुः<br>
सत्यं व्याप्तेर्वाचको विष्णुशब्दः ॥ ४१ ॥

देवेष्विति । विष्णुर्देवेष्वेकोऽन्यतमोऽदृश्यत पुरः स्वरूपमवलम्ब्याद्रिं कर्षन् कश्चिद्विष्णुरदृश्यत । तथा दैत्यानां वर्गेषु चैको भगवांस्तद्रूपोऽदृश्यत । एकः पुनर्मूर्तित्रय्याः पूरकोऽदृश्यत । येन विना मूर्तित्रयी न पूर्णा भवति । अत-

त्वत्पूरकोऽपि विष्णुस्तत्राद्दश्यत । एकः शेषतल्पे फणिराजशयने निद्रन् स्वपन्। द्राधातोः शतरि रूपम् । तत्रापि शयानोऽदृश्यत । अत इदं निश्चितमित्याह सत्यमिति । विष्णुरिति यः शब्दः स व्याप्त्यर्थस्य वाचक इति यत् तत् सत्यमेवेत्यर्थः । विष्लृ व्याप्ताविति धातुः । मुख्यया वृत्त्या तदर्थ एवायं विष्णुशब्द इतीदानीं निश्चितमिति भावः ॥ ४१ ॥

दातुं किञ्चिद्विश्रमं कर्षकेभ्य-
स्तादृग्दीर्घैर्बाहुदण्डैश्चतुर्भिः ।
स्वेनैवासौ वासुकिं व्याचकर्ष
श्लाघापात्रीभूय भूतेशधात्रोः ॥ ४२ ॥

दातुम् इति । असौ विष्णुः कर्षकेभ्यः कर्तरि ण्वुल् । देवासुरेभ्य इत्यर्थः । किञ्चिद्विश्रमं दातुमल्पमुच्छ्वासं सम्पादयितुं स्वेनैव स्वयमेव न त्वन्यसहायः, तादृग्दीर्घैस्तथाभूतद्राघिष्ठतया विश्वातिलङ्घिभिर्बाहुदण्डैर्वासुकिं व्याचकर्ष सर्पपाशाकर्षणं कृतवान् । कथम् । भूतेशधात्रोः शिवविरिञ्च्योः श्लाघापात्रीभूय श्लाघा स्तुतिस्तस्या विषयतां प्राप्य; वर्तमान इति शेषः । मूर्तित्रयेऽन्यतमयोरप्यावयोरसाध्यम् । तत्राप्ययं तामप्यधिगतवानित्यर्थः ॥ ४२ ॥

वर्गावेतौ तत्र पूर्वाधिकेन
प्रोत्साहेन व्याप्रियेतां स्वकृत्ये ।
आत्मक्लेशं जानतो भर्तुरग्रे
प्राणांश्चापि स्वैरमुज्झन्ति भृत्याः ॥ ४३ ॥

वर्गाविति । एतौ वर्गौ देवसङ्घोऽसुरसङ्घश्च तत्र स्वकृत्ये समुद्रमथनरूप आत्मकरणीये वस्तुनि पूर्वस्मादधिकेन प्रोत्साहेन व्याप्रियेतां व्यापारं कृतवन्तौ भगवदाकर्षणदर्शनात्तयोः पूर्वाधिकस्तदाकर्षणोत्साहोऽभूदित्यर्थः । उक्तमर्थान्तरन्यासेन समर्थयते । भृत्याः कर्मकराः आत्मक्लेशं स्वप्रयत्नं जानत स्वामिनोऽग्रे प्रयोजने विषये प्राणांश्चापि निजजीवितमपि स्वैरं स्वच्छन्दं यथा भवति तथोज्झन्ति । किं पुनरन्यदिति भावः । तदुक्तम् —

'सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्यः
संभावनागुणमवेहि तदीश्वराणाम् ।'

इति ॥ ४३ ॥

इत्थमाकृष्यमाणस्याद्रेरवस्थामाह :—

वेगाकृष्टिभ्रष्टमूलो महाद्रि-
मज्जन्नोधि क्षीरसिन्धावगाधे ।
इष्टप्राप्तौ सत्वरस्यापि हि स्या-
दत्यारम्भः क्वाप्यनिष्टाप्तिहेतुः ॥ ४४ ॥

वेगेति । महाद्रिर्मन्दरः वेगाकृष्ट्या द्रुततराकर्षणेन हेतुना भ्रष्टमूलः सन् स्वस्थानात् च्युतमूलभागः सन् अगाधे तलस्पर्शरहिते क्षीरसिन्धौ मज्जन् क्रमेणाधोऽधो निमज्जनं कुर्वन्नैक्षि ईक्षितः । रज्जुबन्धनस्थानमतिक्रम्योपर्युपरि सलिलमग्नोऽभूदित्यर्थः । तदेव समर्थयते : इष्टस्याभिलषितस्य वस्तुनः प्राप्तौ लाभे विषये सत्वरस्यातित्वरावतो जनस्य अत्यारम्भः सामान्यतोऽतिप्रवृत्तिः क्वापि कस्याञ्चिदवस्थायामनिष्टाप्तेरनिष्टाया आपदः प्राप्तेर्हेतुः कारणं स्यात् । हि यस्मात्तस्मादिदमापतितमित्यर्थः । यदुक्तम् 'अति सर्वत्र गर्हितम्' इति । यथाहुः 'अतिरागोऽपि कार्याणामरागपदलम्भकः' इति ॥ ४४ ॥

भगवदवतारमुपन्यस्यति—

शैलस्थूलस्थेष्ठपृष्ठास्थिपीठ-
स्पष्टाघृष्टिभ्रष्टभास्वद्विमानम् ।
बिभ्रद्व्यासं वर्ष्म भीष्मं दधान-
स्तत्रोदासीत् कच्छपः कश्चिदुच्चैः ॥ ४५ ॥

शैलेति । तत्र तस्मिन्नवधौ कश्चिदनिर्देश्यरूपः उच्चैरत्युन्नतः कच्छपः कूर्मराज उदासीदुद्भूतः । बिभ्रद्व्यासं वर्ष्म शरीरं भीष्मं भयानकं दधानो धारयन् । वर्ष्म प्रमाणं वा । तत् कीदृशम् । शैलवत् स्थूलस्य बृहत्प्रमाणस्य स्थेष्ठस्य स्थिरतरस्य पृष्ठास्थिपीठस्य पीठरूपपृष्ठास्थिलस्य स्पष्टं सर्वप्रकाशं यथा भवति तथा आघृष्ट्या सङ्घर्षणेन भ्रष्टं प्रयाणमार्गात् किमपि च्युतं भास्वद्वि-मानं सूर्यस्यन्दनं येन तादृग्गुणं(न ? उन्न)तं वर्ष्म दधानस्तत्राविर्भूत इति समन्वयः ॥ ४५ ॥

दूरोद्वेलद्भूरिकल्लोलमाले
भीतिभ्राम्यन्नक्रमातङ्गचक्रे ।
वारां पत्युर्वारिणि स्फारघोर-
प्रव्यक्तास्यो दिव्यकूर्मो ममज्ज ॥ ४६ ॥

दूरेति। दिव्यकूर्म आदिकूर्मो वारां पत्युरम्बुधेर्वारिण्यम्भसि ममज्ज मग्नवान्। कीदृशोऽसावित्यत्राह। स्फारं विस्तीर्णं यथा भवति घोरं भयङ्करं यथा भवति तथा च व्यक्तं विदीर्णमास्यं मुखं यस्य स तथा। कीदृशे वारिणि। दूरमत्यर्थमुद्वेल्लन्त्य उच्चलन्त्यो भूरिकल्लोलमालाः प्रवृद्धतरङ्गा (वल्यो यस्मिन्। भीत्या भ्राम्यतां नक्रमातङ्गा)नां करिमकराणां च चक्रं समूहो यस्मिन्। इदं च तन्मज्जनसमयावस्थाप्रतिपादकं विशेषणद्वयम्॥ ४६॥

अथ ब्रह्मरुद्रादीनामस्य तथावबोधप्रकारमाह—

एवंभीमं कामठं कामरूपी
रूपं धत्ते विष्णुरेवैष देवः।
वक्तीदं नो व्यक्तमस्याङ्गदीप्ति-
र्मेघच्छन्नोऽप्यूष्मणोन्नीयतेऽर्कः॥ ४७॥

एवमिति। एष दृश्यमानो देवः क्रीडाविजिगीषादिगुणशाली विष्णुरेव, नान्यः। कामरूपी स्वेच्छानु(गणना? गुणनाना)रूपग्रहणशीलः, एवंभीमं ईदृक्प्रकारभयङ्करं कामठं कमठसम्बन्धि रूपं धत्ते स्वीकरोति। कथं भवन्तो जानन्तीति चेदत्राह। अस्य कूर्मराजस्याङ्गदीप्तिरसाधारणशरीरौज्ज्वल्यं नोऽस्मान् प्रतीदं, अहं विष्णुरेवेति, व्य[illegible] ज्ञापयति। अत्र युक्तिमाह — अर्को मेघच्छन्नोऽपि जलधरनिकरतिरोहितोऽपि सन् ऊष्मणा औष्ण्येन चिह्नेनोन्नीयते ऊह्यते मेघगर्भे स भगवानस्तीति। एवमयमपीत्यभिप्रायः॥ ४७॥

अम्भोमग्नस्यास्य मन्थाचलस्य
प्रोद्धारार्थो ह्यस्य कूर्मावतारः।
इत्याबुध्य ब्रह्मरुद्रेन्द्रमुख्या
देवास्तावद्देवदेवं प्रणेमुः॥ ४८॥

अम्भ इति। अस्य विष्णोः कूर्मावतारः किमर्थमिति चेत् अम्भसि मग्नस्यास्य मन्थानाचलस्य प्रोद्धार उद्धरणमर्थः प्रयोजनमस्येति तथाविधः। हिरवधारणे। तदर्थ एवेत्यर्थः। इति एवंप्रकारमाबुध्य ज्ञात्वा ब्रह्मरुद्रेन्द्रमुख्यास्तत्प्रधाना देवास्तावत्तदवसरे देवदेवं देवानामपि देवं महाविष्णुं प्रणेमुः प्रणतवन्तः॥ ४८॥

क्रूरोन्नादी कूर्मराडम्बुराशे-
रन्तर्भागं वेगतो गाहमानः ।
पृष्ठाष्ठीलेनाप्रमेयप्रथिम्ना
निमज्जन्तं मन्दरं सन्दधार ॥ ४९ ॥

क्रूरेति । क्रूरं परुषं यथा तथोन्नादितुमुच्चैः शब्दं कर्तुं शीलमस्येति स तथा सन् कूर्मराडादिकूर्मपतिरम्बुराशेरन्तर्भागमभ्यन्तरं वेगतः क्षिप्रं गाहमानः प्रविशन् निमज्जन्तं मङ्क्त्वा मङ्क्त्वाधोगच्छन्तं मन्दरम् अप्रमेय ईदृगिति प्रमातुमशक्यः प्रथिमा विस्तारातिशयो यस्य तथाविधेन पृष्ठाष्ठीलेन पृष्ठास्था सन्दधार सन्धारितवान् ॥ ४९ ॥

विष्वग्व्यापिस्थूलमूलोऽपि शैल-
स्तिष्ठन् मध्येकर्परं कच्छपस्य ।
तौल्यं दध्रे पद्मपत्रैकदेश-
व्यालग्नस्य प्रायशः षट्पदस्य ॥ ५० ॥

विष्वगिति । शैलो मन्दराद्रिर्विष्वग्व्यापि समन्ताद्व्याप्तं स्थूलं (मूलं) यस्य तथा सन्नपि कच्छपस्य कूर्मराजस्य मध्येकर्परं कर्परस्य पृष्ठास्थ्नो मध्ये तिष्ठन्, पद्मपत्रस्य एकदेशे एकभागे व्यालग्नस्य (शि ? श्लि)ष्टस्य, स्थितस्येत्यर्थः । षट्पदस्य भृङ्गस्य प्रायशो बाहुल्येन तौल्यं सादृश्यं दध्रे धृतवान् । विस्तारिणि पद्मदले स्थितमल्पप्रमाणं मधुकरमनुकृतवानित्यर्थः ॥ ५० ॥

कूर्माधीशेनोद्धृतः पूर्वमुच्चै-
रुत्सर्पद्भिः सूचितो वीचिभङ्गैः ।
ईहावातव्यस्तवारिप्रबन्धा-
दम्भोराशेरद्रिराडुन्ममज्ज ॥ ५१ ॥

कूर्मेति । अद्रिराडम्भोराशेरुन्ममज्जेत्यन्वयः । कीदृशः । कूर्मराजेनोद्धृतः पृष्ठे सन्धार्योद्गमितः । पूर्वं तदुद्गमनात् प्रथममेव उच्चैरुत्सर्पद्भिः उपरि प्रवर्तमानैः वीचिभङ्गैस्तरङ्गैः सूचितः । अयमुन्मज्जतीति व्यञ्जितः । कीदृशादम्भोराशेः । ईहावातेन वेगपवनेन व्यस्तो विभक्तो वारिप्रबन्धो जलसमूहो यस्य तस्मादम्भोराशेः क्षीराब्धेः सकाशादुन्ममज्ज उद्गतवान् । नासूचितस्य प्रवेश इति वचनानुसारेण कस्यचिन्नायकस्य सूत्रधारसूचितो रङ्गप्रवेशोऽत्र साधीयते ॥ ५१ ॥

स्नातोत्तीर्णस्वर्वधूकेशपाश-
श्च्योतत्पाथोबिन्दुमुक्तावतंसः ।
सिक्तोन्मृष्टस्पष्टसानुस्तदानी-
मासीदुच्चैःसुन्दरो मन्दराद्रिः ॥ ५२ ॥

स्नातेति । (मन्दराद्रिः) उच्चैःसुन्दरः अतिशयेन सुभगदर्शन आसीत् । कीदृग्भूतः । पूर्वं स्नातानां पश्चादुत्तीर्णानामुत्थितानां स्वर्वधूनां तच्छृङ्गविहारिणीनामप्सरसां केशपाशेभ्यः प्रशस्तकुन्तलभारेभ्यः श्च्योतद्भिर्विगलद्भिः पाथोबिन्दुभिः जलकणैरेव मुक्ताभिर्वतंसः शिरोलङ्कारो यस्य । किञ्च पूर्वं सिक्तानि पश्चादुन्मृष्टानि धौतानि (स्पष्टानि च) सानूनि प्रस्थदेशा यस्य । तथा भूतत्वादस्योच्चैःसुन्दरत्वमुपपादितम् ॥ ५२ ॥

भूयोऽप्येनं पीनदीर्घाहिनद्धं
दुग्धाम्भोधावुच्चकैरुद्भ्रमन्तम् ।
अक्राक्षुस्ते शुक्रशिष्यादितेया
विक्रोशन्तं चक्रवाताभिघातात् ॥ ५३ ॥

भूय इति । शुक्रशिष्या असुरा आदितेयाः सुराः । ते शुक्रशिष्यादितेया भूयोऽप्येनमक्राक्षुरित्यन्वयः । भूयोऽपि तदुन्मज्जनादनन्तरं पुनरपि एनं मन्दरमक्राक्षुः कृष्टवन्तः । कीदृशमेनम् । पीनेन स्थूलेन दीर्घेणायतेनाहिना वासुकिना नद्धं बद्धम् । दुग्धाम्भोधौ उच्चकैरतिशयेनोद्भ्रमन्तं परिवर्तमानम् । चक्रवातानां पर्वतभ्रमानुसारेण मण्डलाकारतया पततां वातानामभिघाताद्धेतोर्विक्रोशन्तं विशेषेण शब्दायमानम् । अभिहननशब्दशक्तिम्(क्रम ? लो)ऽत्र विक्रोशस्य रोदनार्थध्वनिः ॥ ५३ ॥

कूर्मश्रेष्ठस्थेष्ठपृष्ठास्थिघृष्टि-
त्रुट्यन्मूलस्तूर्णमद्रिर्जुघूर्णे ।
वाताविद्धप्रस्थकान्तारपुष्प-
व्रातश्च्योतत्पांसुजम्बालिताम्बुः ॥ ५४ ॥

कूर्मेति । (अद्रिः) कूर्मश्रेष्ठस्थेष्ठपृष्ठास्थिघृष्टित्रुट्यन्मूलस्तूर्णं जुघूर्णे इत्यन्वयः । जुघूर्णे बभ्राम । 'घुण घूर्ण भ्रमणे' इति धातुः । कीदृशः ।

कूर्मश्रेष्ठस्य दिव्यकच्छपस्य स्थेष्ठेन स्थिरतरेण पृष्ठास्था या धृष्टिर्घर्षणं तया हेतुना त्रुट्यन्मूलः छिन्नाधोभागः । वाताविद्धानां मरुता प्रेरितानां प्रस्थे सानुनि यानि कान्ताराणि काननानि, तेषां पुष्पव्रातेभ्यः कुसुमनिकरेभ्यः श्च्योतद्भिः किरद्भिः पांसुभिः परागैः जम्बालिताम्बुः पङ्कीकृताब्धिसलिलः ॥ ५४ ॥

अब्धेरित्थं क्षोभितादुत्पपात
क्ष्वेलस्तावत् कालकूटाभिधानः ।
आदायैनं विश्वमेतद् दहन्तं
व्यग्रेष्वन्येष्वग्रसत् कृत्तिवासाः ॥ ५५ ॥

अब्धेरिति । तावत् तदवसरे इत्थमुक्तप्रकारेण क्षोभितात् सञ्चालितात् । 'क्षुभ सञ्चलने' इति धातुः । मथितादिति यावत् । अब्धेः सकाशात् । कालकूट इत्यभिधानं यस्य स क्ष्वेलो विषम् । 'क्ष्वेलस्तु गरलं विषम्' इत्यमरः । उत्पपात उज्जगाम । अन्येषु विरिञ्चपुरन्दरादिषु व्यग्रेषु व्याकुलेषु सत्सु कृत्तिवासाः परमेश्वरः । एतद् दृश्यमानं विश्वं लोकं दहन्तं तपन्तमेनं क्ष्वेलमादाय स्वकपालपात्रे निधायाग्रसद् भक्षितवान् । 'ग्रसु ग्लसु अदने' इति धातुः ॥५५॥

आहेयं तत् पीतमप्यस्य कण्ठं
नीलं चक्रे शूलिनश्चित्रमेतत् ।
यद्वा हेतोरस्ति कार्यं विरुद्धं
श्यामा यूनः किं न रक्तान् करोति ॥ ५६ ॥

आहेयम् इति । तदाहेयमहेः सम्बन्धि विषं पीतमपि ग्रस्तमपि । पीतवर्णमपीति च स्फुरति । अस्य शूलिनः शम्भोः कण्ठं नीलं कृष्णवर्णं चक्रे । अत एव नीलकण्ठ इत्युच्यते । एतत् पीतवर्णं वस्तु नीलवर्णं चक्र इति यत् तदिदं चित्रमद्भुतम् । अथवा नेदमद्भुतमित्यद्भुतत्वाभावे उपपत्तिमाह यद्वेति । हेतोर्विरुद्धं कार्यमस्ति । कारणविलक्षणं कार्यमपि क्वचिद्विद्यते । कुत्र तदिति चेदत्राह । श्यामा यौवनमध्यस्था स्त्री । श्यामवर्णेति च [illegible]यति । यूनस्तरुणान् रक्तान् अनुरागयुक्तान् रक्तवर्णानिति च । किं न करोति । करोत्येवेत्यर्थः । अत्र श्यामवर्णा(न् ? रक्तान्) करोतीति तावदाभासमानोऽर्थः पीतं वस्तु नीलं चक्रे इत्याभासमानमर्थं समर्थयते । अतोऽयमर्थान्तरन्यासः ॥ ५६ ॥

भूयो जातो भूरुहः पारिजातो
दातॄणां यो जायते सोपमानम् ।
धेनुश्चैवं कामदा प्रादुरासीत्
प्रायः सिद्धं वज्रिणः साध्यमाभ्याम् ॥ ५७ ॥

भूय इति । भूयस्तदनन्तरं पारिजातो नाम भूरुहः सुरशाखी जातः । अब्धेरित्येव प्रादुर्भूतः । कीदृशः । यः पारिजातो दातॄणां दानशौण्डानामुपमानमुदाहरणं जायते स्म जातः । पारिजात इवासाविति तेन दातृजन उपमीयते । एवं तद्वदेव कामदा अभीष्टप्रदा धेनुः सुरभिश्च प्रादुरासीदब्धेरुद्भूता । आभ्यां पारिजातधेनुभ्यां वज्रिण इन्द्रस्य साध्यं प्राप्तव्यं प्रायो बाहुल्येन सिद्धं प्राप्तम् । एतदुभयमपेक्ष्यामृतलाभ उपसर्जनमेवेति भावः ॥५७॥

सर्वश्वेतो नाग ऐरावतोऽभू-
दश्वस्तादृक्साधुरुच्चैःश्रवाश्च ।
सर्वं चेदं वासवः स्वीचकार
श्रेयस्कामो न क्व जागर्ति लोकः ॥ ५८ ॥

सर्वेति । सर्वेऽवयवा श्वेता यस्येति सर्वश्वेतः । सर्वशुक्ला सरस्वतीतिवत् । ऐरावतो नाम नागश्च । तादृक्साधुः ऐरावत इव सर्वश्वेतत्वात् साधुर्भद्ररूपः उच्चैःश्रवा नामाश्वश्चाभूत् । अब्धेरित्येव । इदं च सर्वं पारिजातादि । 'नपुंसकमनपुंसकेन' (१-२-६९) इत्येकवद्भावः । वासव इन्द्रः स्वीचकार परिगृहीतवान् आत्मस्वं कृतवानित्यर्थः । तथाहि श्रेयस्काम आत्माभ्युदयार्थी लोको जनः क्व न जागर्ति कस्मिन्नर्थे जागरूको न भवति । आदेयेषु वस्तुषु क्वापि न प्रमाद्यतीत्यर्थः ॥ ५८ ॥

चन्द्रो जातस्तं पुनः शम्भुदेव-
श्चक्रे सद्यः स्वात्मनो मौलिभूषाम् ।
नूनं जानन्नोषधीशाख्यमेनं
क्ष्वेलक्षोभे तत्प्रतीकारकामः ॥ ५९ ॥

चन्द्र इति । चन्द्रो जातः अब्धेरुद्भूतः । पुनःशब्दो जननानन्तरकालवाची । शम्भुदेवस्तं चन्द्रं सद्यः तत्क्षणमेव स्वात्मनः स्वस्य मौलिभूषां शिरोलङ्कारं चक्रे कृतवान् । जातमात्रमेनमादाय निजकपर्दे निक्षिप्तवानित्यर्थः

कूर्मश्रेष्ठस्य दिव्यकच्छपस्य स्थेष्ठेन स्थिरतरेण पृष्ठास्था या घृष्टिर्घर्षणं तया हेतुना त्रुट्यन्मूलः छिन्नाधोभागः । वाताविद्धानां मरुता प्रेरितानां प्रस्थे सानुनि यानि कान्ताराणि काननानि, तेषां पुष्पव्रातेभ्यः कुसुमनिकरेभ्यः श्च्योतद्भिः किरद्भिः पांसुभिः परागैः जम्बालिताम्बुः पङ्कीकृताब्धिसलिलः ॥ ५४ ॥

अब्धेरित्थं क्षोभितादुत्पपात
क्ष्वेलस्तावत् कालकूटाभिधानः ।
आदायैनं विश्वमेतद् दहन्तं
व्यग्रेष्वन्येष्वग्रसत् कृत्तिवासाः ॥ ५५ ॥

अब्धेरिति । तावत् तदवसरे इत्थमुक्तप्रकारेण क्षोभितात् सञ्चालितात् । 'क्षुभ सञ्चलने' इति धातुः । मथितादिति यावत् । अब्धेः सकाशात् । कालकूट इत्यभिधानं यस्य स क्ष्वेलो विषम् । 'क्ष्वेलस्तु गरलं विषम्' इत्यमरः । उत्पपात उज्जगाम । अन्येषु विरिञ्चिपुरन्दरादिषु व्यग्रेषु व्याकुलेषु सत्सु कृत्तिवासाः परमेश्वरः । एतद् दृश्यमानं विश्वं लोकं दहन्तं तपन्तमेनं क्ष्वेलमादाय स्वकपालपात्रे निधायाग्रसद् भक्षितवान् । 'ग्रसु ग्लसु अदने' इति धातुः ॥५५॥

आहेयं तत् पीतमप्यस्य कण्ठं
नीलं चक्रे शूलिनश्चित्रमेतत् ।
यद्वा हेतोरस्ति कार्यं विरुद्धं
श्यामा यूनः किं न रक्तान् करोति ॥ ५६ ॥

आहेयम् इति । तदाहेयमहेः सम्बन्धि विषं पीतमपि ग्रस्तमपि । पीतवर्णमपीति च स्फुरति । अस्य शूलिनः शम्भोः कण्ठं नीलं कृष्णवर्णं चक्रे । अत एव नीलकण्ठ इत्युच्यते । एतत् पीतवर्णं वस्तु नीलवर्णं चक्र इति यत् तदिदं चित्रमद्भुतम् । अथवा नेदमद्भुतमित्यद्भुतत्वाभावे उपपत्तिमाह यद्वेति । हेतोर्विरुद्धं कार्यमस्ति । कारणविलक्षणं कार्यमपि क्वचिद्विद्यते । कुत्र तदिति चेदत्राह । श्यामा यौवनमध्यस्था स्त्री । श्यामवर्णेति च [स्फु]रति । यूनस्तरुणान् रक्तान् अनुरागयुक्तान् रक्तवर्णानिति च । किं न करोति । करोत्येवेत्यर्थः । अत्र श्यामवर्णा(न ? रक्तान्) करोतीति तावदाभासमानोऽर्थः पीतं वस्तु नीलं चक्रे इत्याभासमानमर्थं समर्थयते । अतोऽयमर्थान्तरन्यासः ॥ ५६ ॥

भूयो जातो भूरुहः पारिजातो
दातॄणां यो जायते सोपमानम् ।
धेनुश्चैवं कामदा प्रादुरासीत्
प्रायः सिद्धं वज्रिणः साध्यमाभ्याम् ॥ ५७ ॥

भूय इति । भूयस्तदनन्तरं पारिजातो नाम भूरुहः सुरशाखी जातः । अब्धेरित्येव प्रादुर्भूतः । कीदृशः । यः पारिजातो दातॄणां दानशौण्डानामुपमानमुदाहरणं जायते स्म जातः । पारिजात इवासाविति तेन दातृजन उपमीयते । एवं तद्वदेव कामदा अभीष्टप्रदा धेनुः सुरभिश्च प्रादुरासीदब्धेरुद्भूता । आभ्यां पारिजातधेनुभ्यां वज्रिण इन्द्रस्य साध्यं प्राप्तव्यं प्रायो बाहुल्येन सिद्धं प्राप्तम् । एतदुभयमपेक्ष्यामृतलाभ उपसर्जनमेवेति भावः ॥५७॥

सर्वश्वेतो नाग ऐरावतोऽभू-
दश्वस्तादृक्साधुरुच्चैःश्रवाश्च ।
सर्वं चेदं वासवः स्वीचकार
श्रेयस्कामो न क्व जागर्ति लोकः ॥ ५८ ॥

सर्वेति । सर्वेऽवयवा श्वेता यस्येति सर्वश्वेतः । सर्वशुक्ला सरस्वतीतिवत् । ऐरावतो नाम नागश्च । तादृक्साधुः ऐरावत इव सर्वश्वेतत्वात् साधुर्भद्ररूपः उच्चैःश्रवा नामाश्वश्चाभूत् । अब्धेरित्येव । इदं च सर्वं पारिजातादि । 'नपुंसकमनपुंसकेन' (१-२-६९) इत्येकवद्भावः । वासव इन्द्रः स्वीचकार परिगृहीतवान् आत्मस्वं कृतवानित्यर्थः । तथाहि श्रेयस्काम आत्माभ्युदयार्थी लोको जनः क्व न जागर्ति कस्मिन्नर्थे जागरूको न भवति । आदेयेषु वस्तुषु क्वापि न प्रमाद्यतीत्यर्थः ॥ ५८ ॥

चन्द्रो जातस्तं पुनः शम्भुदेव-
श्चक्रे सद्यः स्वात्मनो मौलिभूषाम् ।
नूनं जानन्नोषधीशाख्यमेनं
क्ष्वेलक्षोभे तत्प्रतीकारकामः ॥ ५९ ॥

चन्द्र इति । चन्द्रो जातः अब्धेरुद्भूतः । पुनःशब्दो जननानन्तरकालवाची । शम्भुदेवस्तं चन्द्रं सद्यः तत्क्षणमेव स्वात्मनः स्वस्य मौलिभूषां शिरोलङ्कारं चक्रे कृतवान् । जातमात्रमेनमादाय निजकपर्दे निक्षिप्तवानित्यर्थः

तत् किमर्थमित्याकाङ्क्षायां तद्धेतुरुत्प्रेक्ष्यते। एनं चन्द्रमोषधीशाख्यम् ओषधीश इत्याख्या संज्ञा यस्य तथाभूतं जानन्। हेतौ शता। क्ष्वेलस्यात्मना पीतस्य विषस्य क्षोभे सति कदाचित् प्रकोपे सति, तस्य क्ष्वेलस्य प्रतीकारकामस्त-त्क्ष्वेलवीर्यविजृम्भणमनेनौषधीशेन प्रशमयिष्यामीति वाञ्छया। नूनमिति सम्भावनाद्योतकम्। अस्यौषधीशत्वाद्विषौषधेरपि विद्यमानत्वमविवादम्। अत-स्तत्परिग्रहणाद्विषमोहप्रशान्तिः स्यादेवेति विज्ञातत्वादिवेति हेतूत्प्रेक्षा॥ ५९॥

जज्ञे लक्ष्मीः स्वर्णपद्मासनस्था
वव्रे चैषा वल्लभं पद्मनाभम्।
सर्वानन्यानुत्सुकानप्यहासीत्
कोऽन्यः सूर्यात् प्रीतिहेतुर्नलिन्याः॥ ६०॥

जज्ञे इति। लक्ष्मीः श्रीर्जज्ञे अब्धेर्जाता। कीदृशी। स्वर्णमयं पद्ममेवासनं तत्रस्था। एषा लक्ष्मीः पद्मनाभं विष्णुं वल्लभं वव्रे च भर्तृत्वेन वृतवती। चकारो जननवरणयोरेककालत्वं द्योतयति। अन्यानिन्द्रादीनुत्सुकान् साभिलाषानपि सर्वानहासीत् त्यक्तवती। एतत् समर्थयते। नलिन्याः पद्मिन्याः सूर्यादन्यः सूर्यं वर्जयित्वेतरः कः पुरुषः प्रीतिहेतुः प्रमोदकारणम्। न कोऽपीत्यर्थः। पद्मायाः पद्मनाभवरणमुचितमेवेति भावः॥ ६०॥

लीलाचारुर्वारुणी नाम देवी
तत्रोदासीदायतारक्तनेत्रा।
जग्राहैनां तामसीं दैत्यवर्गो
यच्छीलो यस्तस्य तच्छील इच्छा॥ ६१॥

लीलेति। तत्राब्धौ वारुणी नाम देवी सुरादेवतोदासीदुद्भूत्। कीदृशी। लीलया विलासेन चारुः सुन्दरी। आयते दीर्घे आरक्ते पाटले च नेत्रे यस्याः। मदहेतुको विलास आरक्तनेत्रत्वं चेति ज्ञेयम्। दैत्यव-र्गोऽसुरसमूहस्तामसीं तमःस्वभावामेनां वारुणीं जग्राह स्वचिकार। अत्र हेतु-माह। यो यच्छीलो यादृक्स्वभावः तस्य जनस्य तच्छीले तादृक्स्वभावेऽर्थे इच्छा अभिलाषः। तमःप्रकृतयोऽसुरास्तमःप्रकृतावस्यामनुरक्ता इत्युपपन्नमेवेत्यर्थः। एतत्पर्यन्तं शालिनी नाम वृत्तम्।

'शालिनी मतौ तौ गौ विरतिर्युगवाजिभिः' इति तल्लक्षणम्॥ ६१॥

अमृतकलशपाणिस्तावदाविर्बभूव
स्मितमधुरमुखेन्दुः स्निग्धनीलोपलश्रीः ।
मकुटकटकहारभ्राजितो यः स देवो
दिशतु विशदमुच्चैर्धाम धन्वन्तरिर्वः ॥ ६२ ॥

अमृतेति । तावत् तस्मिन् काले यो धन्वन्तरिः धन्वन्तरिनामादिदैवो विष्णोरवतारविशेष आविर्बभूवाब्धेराविरासीत् । कीदृशः । पाणावमृतकलशः सुधापूर्णकुम्भो यस्य । (शोभ ? स्निग्ध)स्य नीलोपलस्येन्द्रनीलरत्नस्य श्रीरिव शोभा यस्य । मकुटेन किरीटेन कटकैर्वलयैर्हारेण मुक्तागुणेन । इदं चोपलक्षणं वनमालाङ्गदकाञ्चीपीताम्बरकौस्तुभादीनामपि । एतैश्च भ्राजितश्शोभितसर्वाङ्गः स देवस्तादृशगुणविशिष्टो द्युतिविशेषशाली धन्वन्तरिर्वो युष्मभ्यमुच्चैर्विशदमत्यर्थावदातं धाम तेजः सकलरोगप्रशमनेन प्रकृष्टशरीरलावण्यादिकं दिशतु प्रतिपादयतु । अथवा उच्चैर्विशदं धाम सदानन्दमयं ब्रह्म । तद्दिशतु । तत्र लयनं हि मुक्तिः, तं परमपुरुषार्थं मोक्षमेव प्रदिशत्विति प्रार्थनायां लोट् । मालिनी नाम वृत्तमिदम् ।

'ननौ मयौ यकारश्च मालिनी वसुवाजिभिः' इति ॥ ६२ ॥

शम्भुजम्भदमनादिषु पश्य-
त्स्वम्भसां निलयनादुदितस्य ।
तस्य पाणिकमलादथ दैत्या-
स्तत्क्षणादहृषतामृतकुम्भम् ॥ ६३ ॥

शम्भिवति । अथ धन्वन्तरेराविर्भावादनन्तरं दैत्याः शम्भुजम्भदमनादिषु हरपुरन्दरप्रमुखेषु । अमरेष्विति शेषः । पश्यत्सु सत्सु ताननादृत्येत्यर्थः । तस्य धन्वन्तरेः पाणिकमलादमृतकुम्भं तत्क्षणात् तदानीमेवाहृषत हृतवन्तः कीदृशस्य । अम्भसां निलयनात् क्षीरसागरादुदितस्य उद्गतस्य । अनेन तेषां साहसिक्यातिशयो व्यज्यते । स्वागता नाम वृत्तमिदम् ।

'रनभागुरुयुग्मं च स्वागतेति निगद्यते' इति ॥ ६२ ॥

नारीभूत्वा नरकमथनः स्निग्धमुग्धैरपाङ्गै-
रादायासावमृतकलशं मोहितेभ्योऽसुरेभ्यः ।

निःशेषार्तिक्षपणममृतं पाययामास देवा-
नापन्नार्तिप्रशमनविधौ किं न कुर्यात् स देवः ॥ ६४ ॥

नारीति । नरकमथनो भगवान् महाविष्णुर्नारीभूत्वा मायया स्त्रीरूपं गृहीत्वा स्नेहव्यञ्जिभिर्मुग्धैः सुन्दरैरपाङ्गैः कटाक्षविक्षेपमोहितेभ्यो वैचित्त्यं प्रापितेभ्यः । पन्वशेभ्य इति यावत् । असुरेभ्यः सकाशादमृतकलशमादाय स्वीकृत्य देवानमृतं पाययामास । पिब(तोत्वद्ग्रसनार्थत्व? तेः प्रत्यवसानार्थत्वाद् द्विकर्मकत्वम् । कीदृशम् । निश्शेषाणां समस्तानामार्त्तीनां जरावैरूप्यप्रभावक्षया-दीनां दुःखानां क्षपणं नाशनम् । अनेनामृतपानक्षण एव निर्जरा विज्वरा पूर्वस्मादधिकतरप्रभावा बभूवुरिति द्योत्यते । ननु तादृशस्य भगवतः स्त्रीरूप-ग्रहणं कथं न लाघवाय भवतीति चेदत्राह । स देवो भगवान् नारायणः आपन्नानाम् आपदं प्राप्तानामार्तेः पीडायाः प्रशमनविधौ प्रशान्तिकर्मणि विषये किं न कुर्यात् । सर्वं करोत्येव । येन ह्यतिक्षुद्रतरमत्स्यकूर्मादिरूपमपि गृह्यते । तदुक्तम् :—

"तिर्यक्त्वमङ्गनात्वं च मनुष्यत्वं च माधव ।
ऊरीकरोतु भक्तानामनुग्रहविधित्सया ॥" इति ।

मन्दाक्रान्तावृत्तमिदम् ।

'मन्दाक्रान्ता मभौ नतस्तगौ गो दिक्तुरङ्गैः' इति ॥ ६४ ॥

कूर्मावतारकथामुपसंहरति —

अनन्यशरणानमूनखिलनिर्जरान् विज्वरान्
विधातुमयमास्थितः कमठविग्रहं दुर्ग्रहम् ।
दधत् कठिनकर्परे विपुलकन्दरं मन्दरं
चराचरगुरुस्स वो भवतु भूयसे श्रेयसे ॥ ६५ ॥

अनन्येति । अन्यशरणं न विद्यत इत्यनन्यशरणानमूनखिलनिर्जरान् सर्वदेवान् विज्वरान् ज्वरो जरागमप्रभावक्षयादिस्तद्रहितान् विधातुं दुर्ग्रहं दुरभिभवं अरिभिर्दुर्जयं च कमठविग्रहं कूर्मशरीरमास्थितोऽधितिष्ठन्नङ्गी-कुर्वन्नित्यर्थः । कठिने कर्कशे कर्परे पृष्ठास्थ्नि विपुला विस्तीर्णाः कन्दरा गुहा

यस्य तादृशं मन्दरं दधत् धारयन् चराणां जङ्गमानाम् अचराणां स्थावराणां च भूतानां गुरुर्नियन्ता सोऽयं नरकमथनो वो युष्माकं भूयसे प्रभूताय श्रेयसेऽभ्युदयाय; निःश्रेयसायेति यावत् । भवतु प्रार्थनायां लोट् । तत्तादृशस्वच्छन्दकृच्छ्रपाकविरच्युतो विच्युतिरहितां मुक्तिं वः प्रदिशत्विति सामाजिकान् प्रत्याशीर्मङ्गलमिदम् ।

'वसुग्रहयतिः पृथ्वी जसौ जसयला गुरुः' इति ॥ ६५ ॥

इति श्रीविष्णुविलासे कूर्मावतारो नाम

द्वितीयः सर्गः ॥

---

## तृतीयः सर्गः ।

अथ वराहावतारं प्रस्तौति —

> ततो हिरण्याक्ष इति प्रतीतो
> दितेस्तनूजोऽजनि दानवेन्द्रः ।
> यस्याभ्रमातङ्गमदाम्बुवृष्टे-
> रवग्रहो दुर्ग्रहवद् भुजोष्मा ॥ १ ॥

तत इति । तत इत्यनेन प्रस्तुतभगवदवतारवर्णनक्रमापेक्षया द्वितीयाव-तारादनन्तरभावी तृतीयावतारः परामृश्यते । हिरण्याक्ष इति प्रतीतः प्रसिद्धो दितेस्तनूजोऽजनि तनूजतया सम्भूतः । दानवेन्द्र इति जातमात्र एव दानवां कुलाधिपत्यसाम्राज्यमास्थितवानिति द्योतयति । यस्य हिरण्याक्षस्य भुजोष्म भुजप्रतापोऽभ्रमातङ्गस्यैरावतस्य मदाम्बुवृष्टेर्मदजलवर्षस्यावग्रहोऽभूत् प्रतिब-न्धोऽभवत् । 'अवे ग्रहो वर्षप्रतिबन्धे' (३-३-५१) इत्यप् । दुर्ग्रहवत् । दुष्टग्रहो यथा वर्षं प्रतिबध्नाति तथाभ्रमातङ्गस्य मदजलरूपं वर्षं प्रतीत्यर्थः । तत्प्रतिबन्धस्तु भयहेतुकमदजलशोषणरूपभुजोष्मणोऽतिगरीयस्त्वद्योतकः । यदुक्तं राघवीये—

'रक्षःपतेः संस्मरता भुजानां क्षणे क्षणे शुष्ककटावटेन ।
ऐरावतेन' इति ॥ १ ॥

> पुरा जयो नाम जनार्दनस्य
> दौवारिको यः सनकादिशापात् ।
> अन्येन साकं विजयाभिधेन
> दैतेयभूयं बिभरांबभूव ॥ २ ॥

पुरेति । पुरा पूर्वं जयो नाम जनार्दनस्य दौवारिको द्वारि नियुक्तः । 'तत्र नियुक्तः' इति ठक् । यो हिरण्याक्षः सनकादीनां मुनीनां शापाद्धेतोः विजयाभिधानेनान्येन साकं दैतेयभूयं दैतेयत्वं बिभरांबभूव धृतवान् । स्वयमेवा-ङ्गीकृतवान् । यतः सप्तजन्मानि स्थानभ्रष्टतया सामान्यजनवत् स्थितेर्जन्मत्रय-मात्रं शत्रुत्वेनावस्थानमेव श्रेय इति भगवद्वैरित्वमेव स्वयं वृतवानि-त्यर्थः ॥ २ ॥

हिंस्रप्रकृत्या तमसा वृतोऽपि
प्रवृद्धतेजोभरदुःसहो यः ।
प्रकामधूमप्रकरानुविद्धो
वनाश्रयो वह्निरिवोद्दिदीपे ॥ ३ ॥

हिंस्रेति । यो हिरण्याक्षो हिंस्रया हिंसाशीलया प्रकृत्या स्वभावेन तमसा वृतस्तमोगुणान्वितोऽपि प्रवृद्धेन प्रकृष्टेन तेजोभरेण भुजप्रतापातिशयेन दुस्सहः सोढुमशक्यः । अत्र तमस्तेजसोरैकाधिकरण्यं विरोधाभासः । अत्रोपमामाह — प्रकाममत्यर्थं धूमप्रकरेणानुविद्धः सम्बद्धो वनाश्रयो वह्निर्दवदहन इवोद्दिदीपे उद्दीप्तवान् दुस्सहोऽभूत् ॥ ३ ॥

अचिन्तितानां विपदां प्रणेतुः
पापादिवापादितचित्ततापात् ।
यस्मादकस्मादभिपातशीला-
द्विश्वेऽपि लोका बिभयांबभूवुः ॥ ४ ॥

अचिन्तितानामिति । विश्वेऽपि लोकाः सर्वजना यस्माद्धिरण्याक्षात् सकाशाद् बिभयांबभूवुर्भीतवन्तः । पापाद्दुरितादिव । पातकाद्यथा बिभ्यति तथेत्यर्थः । उभयसाधारणं विशेषणत्रयमाह—अचिन्तितानामविचारितपूर्वाणां विपदामापदां रोगादीनां धनधान्यप्राणविनाशादीनां च प्रणेतुरुपपादयितुः । आपादितचित्ततापात् कृतमनःसन्तापात् । अकस्मादहेतुकमभिपात आपतनं शीलमस्येति तथाभूतादिति ॥ ४ ॥

स दानवेन्द्रो भुजदण्डकण्डूं
वीराभियोगेन विनेतुकामः ।
गदासहायो जगदार्तिहेतु-
श्चचार सर्वत्र वसुन्धरायाम् ॥ ५ ॥

स इति । स तथाभूतो दानवेन्द्रो हिरण्याक्षो वीरैरभियोगो युद्धसङ्घटनं तेन भुजदण्डयोः कण्डूं गात्रघर्षणव्याधिमिव दर्पातिशयं विनेतुकामोऽपनेतुमिच्छावान् जगतामार्तेरतिव्यथाया हेतुः सन् गदैव केवलं सहायो यस्य, न तु सैन्यम् । तादृशो वसुन्धरायां भूमौ सर्वत्र सर्वप्रदेशेष्वपि चचार सञ्चारं कृतवान् भूमौ भुजपराक्रमशालिनः पुरुषानन्विष्य पर्यटितवानित्यर्थः ॥ ५ ॥

यतो यतोऽदृश्यत विश्ववैरी
ततस्ततोऽधावदशेषलोकः ।
क्व रात्रिकालेन दिनस्य दृष्ट-
स्तमोधिवासेन सहाधिवासः ॥ ६ ॥

यत इति । विश्वेषां वैरी निष्कारणशत्रुः स यतो यतोऽदृश्यत यत्र प्रदेशे दृष्टस्ततस्ततः तस्मात्तस्मात् प्रदेशादशेषलोकः सर्वजनोऽधावत् पलायितवान् । युक्तमिदमित्याह — तमसोऽन्धकारस्याधिवासेनावासस्थानेन रात्रिकालेन सह दिनस्याधिवासः स्थितिः क्व दृष्टः कुत्र प्रदेशे केनाप्यवलोकितः, न क्वापीत्यर्थः । तद्वत्तमःप्रकृतिकेनानेन सह सुजनस्याधिवासो न सङ्कट-(ती ? ते इ)ति भावः ॥ ६ ॥

तेनाभ्यमित्रं क्वचिदप्यमित्रं
धात्रीतलेऽनाप्नुवतासुरेण ।
स्वस्य प्रचण्डं परिघप्रमाणं
भाराय मेने भुजदण्डयुग्मम् ॥ ७ ॥

तेनेति । तेनासुरेण हिरण्याक्षेण स्वस्यात्मनः परिघप्रमाणं परिघवत् स्थूलदीर्घं भुजदण्डयुग्मं भाराय मेने । युद्धाभावाद् वृथेत्यात्मनो भार इव जातमिति कल्पितवानित्यर्थः । मेन इति कर्मणि लिट् । तत्र हेतुगर्भं विशेषणमाह—क्वचिदपि कुत्रचित् प्रदेशेऽपि धात्रीतले अभ्यमित्रममित्रमभिमुखीकृत्य प्रवर्तमानममित्रं शत्रुमनाप्नुवता अलभमानेन । दृष्टमात्रे सर्वेषां पलायनादभिमुखागतं कमपि न लब्धवानित्यर्थः । अनाप्नुवतेति हेतौ शता ॥ ७ ॥

यत्र प्ररोहन्ति हि धर्मबीजा-
न्युप्तानि सप्तार्णवमेखलायाम् ।
इमां क्षमामप्सु निमज्जयामी-
त्यमर्षशाली स विनिश्चिकाय ॥ ८ ॥

यत्रेति । अमर्षशाली असहनस्वभावः । सदा क्रुद्ध इत्यर्थः । हिरण्याक्ष इत्युक्तप्रकारं विनिश्चिकाय मनसा विचार्य निश्चितवान् । तत् प्रथः । सप्तार्णवा एव मेखला यस्याः सा सप्तार्णवमेखला तथाभूतायां यत्र यस्यां क्षमायां भूमौ उप्तानि विक्षिप्तानि धर्मबीजानि धर्मरूपाणि (बीजानि)

प्ररोहन्ति प्रादुर्भवन्ति अङ्कुरं दर्शयन्ति । हिरत्र प्रसिद्धौ । तामिमां क्षमामप्सु निमज्जयामि सलिलमग्नां करिष्यामि । वर्तमानसामीप्याद्वर्तमाननिर्देशः । आधारविनाशे सति तदाधेयभूतो धर्मः स्वयमेव नङ्क्ष्यतीति भावः । एवं निश्चितवानिति सम्बन्धः ॥ ८ ॥

अथो जवादञ्जनशैलवर्ष्मा
गदाहतिद्रावितदिग्गजेन्द्राम् ।
पादाभिघातश्लथसन्धिबन्धां
वसुन्धरां न्यश्चयति स्म दैत्यः ॥ ९ ॥

अथो इति । अथो एवं निश्चयादनन्तरं दैत्यो जवाद्वसुन्धरां भूमिं न्यञ्चयति स्म अधो गमयामास । कीदृशः । अञ्जनशैल इव पृथुत्वादसितत्वाच्च वर्ष्म शरीरं यस्य । इदं च भूमिन्यञ्चनसामर्थ्यद्योतकम् । वसुन्धरां कीदृशीं कृत्वा । गदाहत्या गदाप्रहारेण द्राविता प्रधाविता दिग्गजेन्द्रा भूमिधरा महागजा यस्याः । पादाभिघातेन चरणप्रहारेण श्लथ. शिथिलो विश्लिष्टः सन्धिबन्धः समन्ततः शैलेषु ग्रथनं यस्याः । तथा कृत्वा न्यञ्चयति स्मेति सम्बन्धः ॥९॥

भारातिरेकावनमत्फणाग्र-
व्याभग्नरत्नेन फणीश्वरेण ।
समुज्झिता वारिनिधावमाङ्क्षी-
न्महीधरारण्यवती मही सा ॥ १० ॥

भारेति । सा तथा तेन न्यञ्चिता महीधरा बहवः पर्वता अरण्यानि वनानि च सन्ति यस्यामिति तद्वती । तैः सहेत्यर्थः । मही वारिनिधौ कारणजले अमाङ्क्षीन्मग्ना । कीदृशी सती । फणीश्वरेणानन्तेन तद्भर्त्रा समुज्झिता साधु परित्यक्ता । कीदृशेन । भारो दैत्यपदाभिघातजनितं घनत्वम् । तस्यातिरेकादाधिक्याद्धेतोरवनमत्सु फणाग्रेषु व्याभग्नानि नितरां लग्नानि रत्नानि फणामणयो यस्य । अनन शिरोवेदनावशेन दुर्भरत्वादुज्झितेत्यर्थः ॥ १० ॥

तिमिङ्गलव्रातनिगीर्यमाण-
मातङ्गसारङ्गवराहसिंहा ।
तेनोपनीता तरसा रसा सा
रसातलं बाहुबलोद्धतेन ॥ ११ ॥

---

१. 'पदाभिघात' इति पाठान्तरम् ।

तिमिङ्गलेति । तेन असुरेण सा तथाभूता रसा भूमिः । 'भूर्भूमिरचला-नन्ता रसा विश्वंभरा' इत्यमरः । बाहुबलेन भुजस्थेम्ना उद्धतेनाहङ्कृतेन तरसा क्षिप्रं रसातलं पातालमुपनीता प्रापिता । कीदृशी । तिमिङ्गला मत्स्यविशेषाः । तिमिं गलन्तीति तिमिङ्गलाः । तथा बालरामायणे—

'अस्ति मत्स्यस्तिमिर्नाम तथा चास्ति तिमिङ्गलः ।
तिमिङ्गलगलोऽप्यस्ति तद्गिलोऽप्यस्ति लक्ष्मण!' ॥ इति ।

तेषां व्रातैः समूहैः निगीर्यमाणा ग्रस्यमाना मातङ्गा वनगजाः सारङ्गा मृगाः वराहाः सूकराः सिंहाश्च यस्याम् । इदमन्येषां श्वापदानामुपलक्षणम् ॥ ११ ॥

नियुज्य रक्षापुरुषानमुष्या
दिक्षु भ्रमन्नम्बुनिरन्तरासु ।
कदाचिदासाद्य जलाधिनाथं
मदान्धचेतास्तमुवाच दैत्यः ॥ १२ ॥

नियुज्येति । दैत्योऽसुरोऽमुष्या भूमेः, रक्षार्थं ये पुरुषास्ते रक्षापुरुषाः, तान् नियुज्य रक्षितुं तत्र स्थापयित्वा अम्बुनिरन्तरासु जलपूरितासु दिक्षु भ्रमन् सञ्चरन् कदाचिज्जलाधिनाथं वरुणमासाद्याभिगम्य मदान्धचेता गर्वमयतमसा-वृतमनाः सन् तं वरुणमुवाचोक्तवान् ॥ १२ ॥

उक्तिप्रकारमाह—

विचित्रसङ्ग्रामविशेषविज्ञा
गदेयमप्राप्तरिपोरहो मे ।
अलब्धभित्तेरिव चित्रकर्म-
प्रवीणता निष्फलतामुपैति ॥ १३ ॥

विचित्रेति । हे पाशिन् अहो कष्टम् । अप्राप्तरिपोः रिपुं कञ्चिदलभ-मानस्य ममेयं गदा निष्फलतामुपैति विफला भवति । कीदृशी चेच्छृणु । विचित्रस्य नानाप्रकारस्य सङ्ग्रामविशेषस्य विशिष्टयुद्धचर्यायाः विज्ञानं विदग्धता तद्विशेषं जानातीत्यर्थः । ईदृश्यपीदानीं निष्फला जाता । किमिव । अलब्ध-भित्तेः भित्तिमलभमानस्य पुरुषस्य चित्रकर्मणि चित्रलेखने प्रवीणता वैदग्ध्य-मिव ।

'सैवेयं मम चित्रकर्मरचना भित्तिं विना वर्तते' ।

इति यावत् ॥ १३ ॥

तन्मया (किं) कर्तव्यमिति चेदत्राह —

करालहुङ्कारभयङ्कराया
निरङ्कुशं मूर्धनि ते पतन्त्याः ।
यद्यस्ति शक्तिर्विनिवारणे स्या-
त्तदेहि पाशिन्नशनेरिवाद्रेः ॥ १४ ॥

करालेति । हे पाशिन् ! अस्या गदाया विनिवारणे विषये अद्रेः पर्वतस्याशनेरिन्द्रवज्रस्य विनिवारण इव ते शक्तिः सामर्थ्यमस्ति यदि । उपमया सामर्थ्याभावोऽत्र प्रकाशितः । तदस्मादेहि इतस्तावत् । कीदृश्याः । करालेन उन्नतेन, उच्चैर्भूतेनेत्यर्थः ।

'करालो दन्तुरे तुङ्गे विशाले विकृतेऽपि च' ।

इति वैजयन्ती । हुङ्कारेण हुमितिशब्देन भयङ्करायाः । निरङ्कुशं निष्प्रतिबन्धं ते मूर्धनि पतन्त्याः शिरसि निपतन्त्याः । अस्या इति सम्बन्धः ॥ १४ ॥

कथमहमसमग्रपरिच्छदोऽस्मिन् कर्मणि प्रगल्भ इति मा शङ्किष्ठा इत्याह—

विरावविक्षोभितरोदसां किं
न यादसां त्वं पतिरद्वितीयः ।
उपेक्षसे हन्त ! किमिद्धसारं
योद्धारमभ्यागतमात्मतुल्यम् ॥ १५ ॥

विरावेति । विरावेणोच्चैःशब्देन विक्षोभितं सञ्चलितं भयविवशीकृतमित्यर्थः । रोदो गगनं अ(पि ? त्र) रोदःशब्देन तत्सञ्चारी जनो लक्ष्यते । तादृशानां यादसां जलसत्त्वानाम् अद्वितीयो द्वितीयरहितः प्रधानः पतिः स्वामी न किम् ! त्वं पतिरेवेत्यर्थः । तत्कुतो निष्परिच्छदत्वमिति भावः । इद्धसारं प्रवृद्धबलं योद्धारं युद्धसमर्थमात्मतुल्यं स्वसदृशपराक्रममभ्यागतमाभिमुख्येन प्राप्तम् । मामिति शेषः । किमुपेक्षसे युद्धसत्कारं विना किं परित्यजसि । हन्तेति खेदे । कष्टमस्तत्खेदावहेयमुपेक्षेति भावः ॥ १५ ॥

युद्धे मे मृत्युर्भविष्यतीति मा भैषीः, चेद्भविष्यति तद्भवतु काममित्याह —

यथा नियुद्धे निहतस्य कीर्ति-
स्तथोज्ज्वला न प्रथते निहन्तुः ।
जीवन् पुनः क्वापि कुतोऽपि भग्नः
कालेन तद्दोषकरोऽपि हि स्यात् ॥ १६ ॥

यथेति । यथा नियुद्धे द्वन्द्वयुद्धे निहतस्य मृत्युं प्रापितस्य जनस्योज्ज्वला निर्दोषा कीर्तिः प्रथते प्रसिद्धा भवति निहन्तुर्निहननकर्तुस्तथा न प्रथते । हन्तृहतयोर्मध्ये हतस्यैवोज्ज्वला कीर्तिर्भवति, न हन्तुः । तत् किमिति चेच्छृणु । जीवन् पुनः युद्धे शत्रुं निहत्य सजीवो वर्तमानस्तु कालेन कालगत्या क्वापि क्वचित्प्रदेशे कुतोऽपि कस्माच्चित्पुरुषाद् भग्नः पराजितस्तद्दोषकरस्तस्याः कीर्तेः दोषकरः कलङ्ककारी अपि हि स्यात् । स्यादिति सम्भावनायां लिङ् । एवमपि सम्भावनीयमित्यर्थः । जीवतः पुरुषस्य दैववशात् पराभवजनितं दुर्यशः पूर्वजातं विजयप्रभवमपि यशो दूषयतीति वाक्यार्थः । अतो मृत्युरेव श्रेयसीति भावः ॥ १६ ॥

इह स्त्रिया वल्लभयापि पुंसः
कियच्चिरं संस्क्रियते शरीरम् ।
जयश्रिया त्व(स्य) परत्र साधो-
राचन्द्रतारं हि यशःशरीरम् ॥ १७ ॥

....कियच्चिरं संस्क्रियते कियन्तं कालं गुणाधानेन संरक्ष्यते । न तु चिरम् । किन्त्वल्पकालमेवेत्यर्थः । जयश्रिया तु जयश्रीरूपया स्त्रिया तु परत्र साधोः परलोकं प्राप्तस्य पुंसः यशःशरीरं यशोरूपं शरीरमाचन्द्रतारं चन्द्रतारसञ्चारमभिव्याप्य संस्क्रियते । अतः सामान्यस्त्रियाः शतगुणयुक्ता जयश्रीरिति भावः । हिरत्र हेतौ । तस्माद्धेतोरिदमभिहितमिति भावः ॥ १८ ॥

तदेहि सङ्ग्रामय पाशपाणे !
मया सह क्रूरगदायुधेन ।
मम त्वदन्तःपुरबाष्पवर्षै-
रमर्षघर्मः प्रशमं प्रयातु ॥ १८ ॥

तदिति । हे पाशपाणे! तत्तस्माद्धेतोरेहि समीपमागच्छ । क्रूरा गदैवायुधं यस्य तादृशेन मया सह सङ्ग्रामय सङ्ग्रामं कुरु । सङ्ग्रामशब्दात् 'तत्करोति' इति णिच् । न तु चौरादिकः 'सङ्ग्राम युद्धे' इति धातुः । अनुदात्तेत्त्वप्रयुक्तमात्मनेपदमनित्यं च चक्षिङो ङित्करणाद् ज्ञापकादित्याहुः । एवं चास्मिन्नेव सर्गे 'अयुध्यतां पोत्रिवरासुरेन्द्रौ' इति प्रयोगोऽपि निर्दोषो भवति । अन्यथा 'युद्ध सङ्ग्राम' इति धातुरप्यनुदात्तेदिति अयुध्यतामिति लङि परस्मैपदमनुपपन्नं स्यात । अयुध्येतामिति प्रयोक्तव्यं स्यात् । ममामर्षधर्मः क्रोधरूपो निदाघस्त्वदन्तःपुराणां स्त्रीणां बाष्पवर्षैर्भर्तृविनाशदुःखजनितैर्नयनजलधाराभिः प्रशमं प्रयातु प्रशान्तिमुपगच्छतु । धर्मप्रशान्तये वर्षमेव साधनमिति भावः ॥ १८ ॥

इत्थं कराग्रप्रवलगद्गदेन
प्रसह्य तेनाभिहितोऽसुरेण ।
सन्त्रासकम्पस्फुटगद्गदेन
जगाद वाक्येन जलाधिनाथः[1] ॥ १९ ॥

इत्थमिति । कराग्रे प्रवलगन्ती क्षिप्यन्ती गदा यस्य तेनासुरेण हिरण्याक्षेण प्रसह्य बलात्कारेणेत्थमेवंप्रकारमभिहित उक्तो जलाधिनाथो वरुणः सन्त्रासेन भयेन कम्पेन शरीरवेपथुना च स्फुटः प्रकाशितो गद्गदो वाक्स्खलनं यस्य तादृशेन वाक्येन जगादोक्तवान् ॥ १९ ॥

कथं तथाभूतपराक्रमेण
त्वया विगृह्णामि सुदुर्बलोऽहम् ।
पञ्चाननस्येव शशोपमर्दा-
न्मन्त्रिग्रहात् का भवतोऽपि कीर्तिः ॥ २० ॥

कथमिति । हे हिरण्याक्ष! तथाभूतपराक्रमेण तादृक्प्रतापशालिना त्वया सह सुदुर्बलः सुतरां बलहीनोऽहं कथं विगृह्णामि विग्रहं करोमि । भवतोऽपि मन्त्रिग्रहान्मम निधनाद्धेतोः का कीर्तिः कीदृशं यशः सम्भविष्यति । शशस्योपमर्दात् निग्रहात् पञ्चाननस्य सिंहस्येव । सिंहः शशं हतवानिति कः स्तूयादित्यर्थः ॥ २० ॥

---

१. 'जलाधिराजः' इति पाठान्तरम् .

सहिष्यते यः समरे भवन्तं
तथाविधं कञ्चन निर्दिशामि ।
निर्देक्ष्यमाणः स जितो यदि स्या-
त्त्वया हिरण्याक्ष ! जिता त्रिलोकी ॥ २१ ॥

सहिष्यत इति । यः समरे भवन्तं सहिष्यते भवता सह समरं कर्तुं समर्थो भविष्यति । तथाविधं तादृक्प्रकारपराक्रमशालिनं कञ्चन पुरुषमहं निर्दिशामीत्युपदिशामि । हे हिरण्याक्ष ! निर्देक्ष्यमाणः मया ते निर्देष्टुं सम्भावितः स पुरुषस्त्वया जितः पराभूतो यदि स्यात् तर्हि त्रिलोकी त्रैलोक्यं जिता त्वया पराभूता भविष्यति । तस्मिन् जिते लोकत्रयमपि जितमेव । तदितरो न जगति कश्चित् पुरुषोऽस्तीति भावः ॥ २१ ॥

मदम्भसि क्वापि महानुभावः
शेते पुमान् कश्चन शेषतल्पे ।
विश्वेश्वरो विष्णुरिति प्रतीत-
स्तदेनमासाद्य रणं वृणीथाः ॥ २२ ॥

मदम्भसीति । कश्चन ईदृश इति वक्तुमशक्यमहिमा महानुभावो महाप्रभावः पुमान् मदम्भसि मम जले शेषतल्पेऽनन्तशयने शेते निद्राति । स क इति चेच्छृणु । विश्वेषां समस्तचराचरप्रपञ्चानामीश्वरो नियन्ता विष्णुरिति प्रतीतः प्रसिद्धः । तत् तस्मात्कारणादेनं महा(पुरुषं) भगवन्तमासाद्य उपगम्य रणं वृणीथाः युद्धमभ्यर्थयेथाः ॥ २२ ॥

इदं शृण्वतोऽसुरस्य व्यवसितिमाह —

तथास्तु विश्वेश्वरशब्दमस्मा-
दाच्छिद्य सद्यो मयि योजयामि ।
जयामि चाऽस्णोः पथि लब्धमेन-
मित्थं विकत्थ्य प्रचचाल दैत्यः ॥ २३ ॥

तथेति । यथा त्वमभिदधासि तथास्तु । 'विश्वेश्वरो विष्णुरिति प्रतीत' इति किल त्वयोक्तम् । तस्य विश्वेश्वर इति यः शब्दः (तं) तस्माद्विष्णोः

सकाशात्तदाच्छिद्यापहृत्य सद्यः क्षिप्रमेव मयि योजयामि । तं शब्दं मयि समवेतं करिष्यामि । तत्कथम् । अक्ष्णोः पथि मम चक्षुर्गोचरे लब्धं प्राप्तमेनं विष्णुं जयामि च युद्धे परिभूतं करिष्यामि । उभयत्र वर्तमानसामीप्ये लट् । तस्मिन् जिते त्वहमेव विश्वेश्वर इति भावः । दैत्य इत्थं विकत्थ्य श्लाघापूर्वमुक्त्वा प्रचचाल ततः प्रास्थितवान् ॥ २३ ॥

एकार्णवीभूतजलैकशेषे
जगत्यटन्नुत्कटसिंहनादः ।
स्वजानुदघ्नीभवदम्बुपूरः
समन्ततो विष्णुमसौ विचिक्ये ॥ २४ ॥

एकेति । असौ दैत्यः एकार्णवीभूतं चत्वारोऽप्यर्णवा मध्ये व्यवधानाभावादैक्यमापन्ना इत्येकार्णवत्वम् । तथाभूतं जलमेकमेव शेषो यस्मिन् तादृशे जगति स्वजानुदघ्नः निजजानुप्रमाणस्तथाभवन्नम्बुपूरो जलप्रवाहो यस्य, तादृगगाधमपि जलं तस्य जानुयुगादुपरि नात्यक्रामदित्यहो तस्य शरीरदैर्घ्यमिति भावः । उत्कटो भयङ्करः सिंहनादो यस्य तथा सन् समन्ततश्चतुर्दिशं विष्णुं विचिक्ये मार्गितवान् ॥ २४ ॥

अथैवं गते सति मनोः प्रवृत्तिं प्रस्तौति —

स्वायम्भुवो नाम मनुस्तदानीं
प्रजासृडेकत्र वसन्नकाण्डे ।
मग्नां महीमप्सु विलोक्य खिन्नो
विरिञ्चमेत्य प्रणमन्नवादीत् ॥ २५ ॥

स्वायम्भुव इति । तदानीं तस्मिन् समये स्वायम्भुवः स्वयम्भुवोऽपत्यम् । ओरोदिति वक्तव्ये गुणवचनं संज्ञापूर्वको विधिरनित्य इति ज्ञापनार्थम् । तेनात्र गुणाभावः । मनुर्नाम प्रजासृट् । प्रजानां सृष्टिकर्ता एकत्र कुत्रचित् प्रदेशे वसन् विरिञ्चमेत्य ब्रह्माणमुपगम्य प्रणमन्नवादीदुक्तवान् ॥ २५ ॥

सृष्टा विसृष्टाश्च मया प्रजा या
नष्टाः क्षितेरप्सु निमज्जनात्ताः ।

अथत्विदानीं त्विह सृज्यमानाः
क्व स्रक्ष्यमाणाश्च विनिक्षिपेयम् ॥ २६ ॥

सृष्टा इति । मया सृष्टा नाशं गताः । अस्तु एवमस्तु । गता(नु चेद्-शाचा? नुशोच)नेन किं स्यादिति भावः । इदानीं तु अस्मिन् वर्तमानकाले तु सृज्यमाना निर्मीयमाणाः, तथेह स्रक्ष्यमाणा इत ऊर्ध्वकालं स्रष्टुमुपक्रान्ताश्च प्रजाः क्व कस्मिन् प्रदेशेऽहं विनिक्षिपे(यं) निदध्याम् । विना नाधदासां (?) निक्षेपस्थानमिति भावः ॥ २६ ॥

आधारनाशे सति नः फलं कि-
माधेयजातप्रतिपादनेन ।
आकस्मिकोऽयं प्रलयं कुतस्त्यः
कष्टो हि नः स्रष्टरनिष्टपातः ॥ २७ ।

आधारेति । आधारभूमेर्नाशे सति आधेयानां वस्तूनां जातस्य समूहस्य प्रतिपादनेन निर्माणेन नोऽस्माकं किं फलम् । किमपि न प्रयोजन-मित्यर्थः । अहमितः परं न स्रक्ष्यामीति भावः । हे स्रष्टः ब्रह्मन् । आक-स्मिकोऽसमयप्राप्तोऽयं प्रलयः कुतस्त्यः कस्मादुद्भूतः । नोऽस्माकमनिष्टपा-तोऽनिष्टप्राप्तिः कष्टः अत्याहितः । अत्यन्तशोचनीय इति यावत् । हीत्यवधारणे । कष्ट एवेत्यर्थः ॥ २७ ॥

इत्थं मनावूचुषि दिव्यदृष्ट्या
दृष्ट्वा हिरण्याक्षविचेष्टितं तत् ।
प्रतीक्ष्यतां कश्चिदितोऽप्यनेहा
वत्सेति वाणीरमणोऽप्यवादीत् ॥ २८ ॥

इत्थमिति । ब्रह्मा दिव्यदृष्ट्या दिव्यचक्षुषा तं तादृशं हिर-ण्याक्षस्य विचेष्टितं व्यापारं दृष्ट्वा ज्ञात्वा हे वत्स इतोऽपीतः परस्तादपि कश्चिदनेहा कालः प्रतीक्ष्यतामनुपाल्यताम् । किञ्चित् क्षम्यताम् , सर्वं शोभनपरिणामं भविष्यति कालेनैवेति भावः । इत्येवमवादीदुक्तवान् ॥ २८ ॥

स तत्र साकं मुनिभिः समस्तैः
समाधिमास्थाय समालुलोके ।
तदक्षरं ब्रह्म तमोरजोभ्या-
मनाविलं किञ्चिदनाद्यनन्तम् ॥ २९ ॥

... ... ... ... ... ... ... तदक्षरं ब्रह्म । तमोरजोऽतीतमित्यर्थः । अनादि आदिरहितम् अनन्तमन्तरहितं च ब्रह्म परब्रह्मस्वरूपं समालुलोके प्रत्यक्षीकृतवान् ॥ २९ ॥

अनन्तरश्लोके वक्ष्यमाणं महो विशिनष्टि —

यत्रानुभूते सति जन्मभाजां
द्वैतभ्रमः शान्तिमुपैति सद्यः ।
स्वतोऽन्यतो वा परमार्थबोधे
स्रजि प्रसक्तेव भुजङ्गशङ्का ॥ ३० ॥

यत्रेति । यत्र यस्मिन् महसि ब्रह्मण्यनुभूते प्रत्यक्षीभूते सति जन्मभाजां शरीरिणां द्वैतभ्रमः जीवपरमात्मनोर्भेदबुद्धिः सद्यः तत्क्षणमेव शान्तिमुपैति प्रशाम्यति । अत्रोपमामाह — स्वतः स्वबुद्ध्यैव अन्यतोऽन्येनोपदिष्टत्वाद्वा परमार्थबोधे तत्त्वज्ञाने सति स्रजि प्रसक्ता भुजङ्गशङ्का स्रजं दृष्ट्वा भुजङ्गोऽयमिति शङ्का इव । तादृशी यथा प्रशाम्यति तथेत्यर्थः । तदुक्तम् —
'शुक्तौ (रजत ? रूप्य)मिव स्रजीव भुजगः स्वात्मावबोधे हरा-
वज्ञाते प्रभवत्यथास्तमयते तत्त्वप्रबोधोदयात् ।' इति । ३० ॥

यतः समुन्मीलति विश्वमेतत्
क्षयेषु यत्रैव विलीयते च ।
तदेतदानन्दरसैकरूपं
विभावयामास महो विधाता ॥ ३१ ॥

यत इति । एतद् दृश्यमानं विश्वं यतो यस्मात्समुन्मीलत्युदेति । प्रकाशीभूय दृश्यत इत्यर्थः । क्षयेषु प्रलयेषु यत्रैव यस्मिन्नेव विलीयते श्लिष्यति । विलयमधिगच्छति । तदेतत्तथाभूतमिदम् आनन्दरसं परमानन्दानुभव एक एव रूपं यस्य, तादृशं महो ब्राह्मं तेजो विधाता विभावयामास विलोकितवान् ॥ ३१ ॥

एवं समाधाय चिराय विष्णौ
धियं सभामावसतो विधातुः ।
घोणान्तरात् कश्चन घोणिपोतो
विनिष्पपात प्रथमानतेजाः ॥ ३२ ॥

एवम् इति । एवमुक्तप्रकारं चिराय दीर्घकालं धियं विष्णौ समाधाय समाध्यवस्थायां दृढमनुषज्य्येत्यर्थः । सभां मुनिपरिषदमावसतस्तत्र स्थितवतो विधातुर्घोणान्तरात् कश्चन प्रथमानतेजाः प्रवृद्धशरीरद्युतिर्घोणिपोतः सूकरशिशु- र्विनिष्पपात अधः पतितः ॥ ३२ ॥

समाधिबन्धाच्छ्लथितान्तरात्मा
पद्मासनः प्रेक्ष्य वराहमेनम् ।
मुकुन्दकारुण्यसुरद्रुमस्य
फलोद्गमोऽसाविति निश्चिकाय ॥ ३३ ॥

समाधीति । पद्मासनो ब्रह्मा समाधिबन्धाच्छ्लथितः शिथिलीकृतोऽन्त- रात्मा मनो येन स तथा एनं वराहं प्रेक्ष्य दृष्ट्वा असावत्र दृश्यमानो मुकुन्दस्य कारुण्यमेव सुरद्रुमः कल्पवृक्षस्तस्य फलोद्गमः फलप्राप्तिरिति निश्चिकाय निश्चितवान् । भगवतो दीनमनोविषया कृपैवेत्थं घोणिरूपेण दृष्टा इति मनसि दृढीकृतवानित्यर्थः ॥ ३३ ॥

क्षणेन पोत्री महिषप्रमाणः
सोऽभूदतो गन्धगजप्रमाणः ।
ततः परस्तादचलप्रमाण-
स्ततः परेणाभवदप्रमाणः ॥ ३४ ॥

क्षणेनेति । पोत्री वराहशिशुः क्षणेन क्षिप्रं महिषप्रमाणोऽभूत् । महिषतुल्यप्रथिमाभवत् । अतस्तदनन्तरं स पोत्री गन्धगजप्रमाणः महागज- तुल्योऽभूत् । ततः परस्तादुपरिकाले अचलप्रमाणः पर्वतसदृशः । ततः परेण तदुत्तरकालमप्रमाणः अनेन तुल्य इति प्रमातुमशक्योऽभूत् । अतिप्रवृद्धत्वा- दुपमानरहितोऽभूदित्यर्थः ॥ ३४ ॥

स सत्यलोकात् पृथुकण्ठरोम-
व्याधेधनिर्दारितवारिवाहः ।
अधोमुखोऽवातरदुग्रदंष्ट्रा
सङ्घर्षणोद्यद्दहनस्फुलिङ्गः ॥ ३५ ॥

स इति । स आदिवराहः सत्यलोकात्सकाशादधोमुखोऽवातरदवततार । कीदृशः । पृथूनां स्थूलदीर्घाणां कण्ठरोम्णां व्याधूननेन ताडनेन निर्दारिता नितरां भेदिता वारिवाहा मेघा येन । उभयोः क्रूरयोः दंष्ट्रयोः सङ्घर्षणेन, तदधोदन्तेन निकर्षणे सति उद्यन्त उच्चैरुत्पतन्तो दहनस्फुलिङ्गा वह्निकणिका यस्य स तथाभूतः ॥ ३५ ॥

गलोद्गलद्घर्घरघोरनाद-
प्रस्फोटिताशाकरिकर्णरन्ध्रः ।
घोणान्तरोदित्वरगन्धवाह-
व्याघूर्णितार्णोधिपयःप्रवाहः ॥ ३६ ॥

गलेति । गलात् कण्ठविवरादुद्गलतोद्गच्छता घर्घरेण परुषतरेण घोरेण भयङ्करेण नादेन करणेन प्रस्फोटितानि आशाकरिणां दिग्गजानां कर्णरन्ध्राणि येन । घोणान्तरान्नासिकारन्ध्रादुदित्वरैरुद्गमनशीलैर्गन्धवाहैः श्वासपवनैर्व्याघूर्णितः संक्षोभितोऽर्णोधीनां समुद्राणां पयःप्रवाहो सलिलपूरो येन ॥ ३६ ॥

ह्रस्वस्थवीयस्तरबालदण्ड
चण्डाभिघातत्रुटिताद्रिकूटः ।
प्रवालभङ्गारुणनेत्ररोचि-
र्वीचिच्छटाविच्छुरिताखिलाशः ॥ ३७ ॥

ह्रस्वेति । ह्रस्वेनाल्पदीर्घेण स्थवीयस्तरेण स्थूलतमेन बालदण्डेन दण्डाकारलाङ्गूलेन यश्चण्डाभिघातः क्रूरप्रहरणं तेन त्रुटितानि खण्डितान्यद्रिकूटानि पर्वतशृङ्गाणि येन । प्रवालभङ्ग इव विद्रुमच्छद इवारुणयोस्ताम्रयोर्नेत्रयो रोचिर्वीचीनां तरङ्गाकृतीनां दीप्तीनां छटाभिः समूहैर्विच्छुरिताः स्पृष्टा अखिलाशाः सर्वा दिशो यस्य ॥ ३७ ॥

भ्राम्यत्तिमि त्रस्ततिमिङ्गिलौघं
विक्षोभदुच्चैर्द्रुतनक्रचक्रम् ।

उत्कूलितोत्तुङ्गतरङ्गमालं
जवादवागाहत सागराम्भः ॥ ३८ ॥

भ्राम्यद् इति । स तादृशो हरिर्वराहो जवाच्छीघ्रं सागराम्भः समुद्र-सलिलमवागाहत प्रविष्टवान् । कीदृशं सागराम्भः । भ्राम्यन्तश्चलन्तस्तिमयो मत्स्य-विशेषा यस्मिन् । त्रस्तो भीतस्तिमिङ्गिलौघो यत्र । विक्रोशदाक्रन्ददुच्चैर्द्रुतमुपरि-प्रधावितं नक्रचक्रं यस्मिन् । उत्कूलिताः कूलमतिक्रान्ता उत्तुङ्गा उन्नतास्तरङ्ग-माला वीचिसमूहा यस्मिन् । सर्वमिदं तदवस्थाविशेषणं द्रष्टव्यम् ॥ १८ ॥

दैत्येन या मूढतमेन गूढं
न्यधायि पातालतले खलेन ।
इतस्ततस्तत्र महीं महीया-
न्मायामृगस्तां मृगयाञ्चकार ॥ ३९ ॥

... ... ... ... मृगयाञ्चकारान्विष्टवान् । मृगधातु-श्चौरादिकोऽदन्तः । (नो वृद्धित्वम् ! अतो न वृद्धिः) ॥ ३९ ॥

निगूहितामप्यसुरेण धात्रीं
पोत्रीश्वरः सत्वरमालुलोके ।
प्रमेयपालिं प्रभवेत् कथं वा
निह्नोतुमह्नां प्रभवेऽन्धकारः ॥ ४० ॥

निगूहिताम् इति । पोत्रीश्वरोऽसुरेण निगूहितां कुत्रचित् गोपितामपि धात्रीं सत्वरं द्रुतमालुलोके आलोकितवान् । अत्र दृष्टान्तमाह — अन्धकार-स्तिमिरं प्रमेयपालिं नरतिर्यगादिपदार्थसार्थं अह्नां प्रभवे सूर्याय निह्नोतुमपलपितुं कथं वा प्रभवेत् शक्नुयात् । अनेन सर्वसाक्षिणे भगवते कथं तमसा मूढो महीं निह्नुवीतेति समर्थितम् ॥ ४० ॥

स तत्क्षणं राक्षसभटान् प्रमथ्नन्
पोत्राञ्चलेनावनिमाबभार ।
सा तत्र शेषाहिफणासहस्र-
विस्रब्धवासादधिकं ननन्द ॥ ४१ ॥

स इति । स पोत्रीश्वरस्तत्क्षणं क्षिप्रं रक्षिभटान् रक्षापुरुषान् दैत्यान् प्रमथ्नन् सञ्चूर्णयन् पोत्राञ्चलेन दंष्ट्राग्रेणावनिं धात्रीमाबभार धृतवान् । आबभारेति पोत्राञ्चलस्याभरणत्वेनावनिमुद्धृतवानित्यर्थः । सा अवनिश्च पोत्राग्रे शेषाहेरनन्तस्य फणानां सहस्रे यो विलब्धवासः विश्रामस्तेन सुखानिवासः तस्मादधिकं ननन्द सुखितवती । शेषफणासहस्रादप्याधिकविस्तीर्णत्वात् पोत्राञ्चलस्यासम्बाधस्थितियोग्यत्वम् ॥ ४१ ॥

नदीनदग्रामनगाटवीनां
शतान्यसङ्ख्यान्यपि बिभ्रती सा ।
अलक्ष्यतानेन हि पोत्रशृङ्गे
न्यस्ता तु मुस्तालतिकेव लघ्वी ॥ ४२ ॥

नदीति । सा धात्री नदीनां नदानां ग्रामाणां नगानामटवीनां चासङ्ख्यानि सङ्ख्याविहीनानि । एतान् समूहान् बिभ्रती धारयन्ती सत्यपि अनेन हि पोत्रीश्वरेण पोत्रशृङ्गे दंष्ट्राशिखरे न्यस्ता निक्षिप्ता तु मुस्तालतिकेव तृणविशेष इव लघ्वी अल्पीयसी अलक्ष्यत दृष्टा । जनैरिति शेषः । आधेयादप्याधारस्य वैपुल्यमत्र प्रदर्शितम् ॥ ४२ ॥

अत्रान्तरे योगिभिरप्यदृश्यं
विष्णुं विचिन्वानमपां निकाये ।
कलिप्रियः कामचरो मुनीन्द्रो
गत्वा हिरण्याक्षमिदं बभाषे ॥ ४३ ॥

अत्रेति । अत्रान्तरेऽस्मिन्नवसरे योगिभिस्तपोधनैरप्यदृश्यं द्रष्टुमलभ्यं विष्णुमपां निकाये जलप्रपञ्चे विचिन्वानं गवेषयन्तं हिरण्याक्षं कलिप्रियः कलहकुतुकी । नारद इत्यर्थः । कामचरः स्वच्छन्दसञ्चारी मुनीन्द्रो गत्वा समेत्येदं वक्ष्यमाणप्रकारं बभाषे भाषितवान् ॥ ४३ ॥

दिष्ट्यासि दृष्टो दितिजाधिनाथ !
वृथा परिक्रामसि वारिचक्रे ।
चक्रायुधस्तु प्रविचीयते चे-
दायाहि मायाविनमीक्षयामि ॥ ४४ ॥

दिष्ट्येति। हे दितिजाधिनाथ दानवश्रेष्ठ दिष्ट्या दैवानुकूल्यादसि दृष्टो मयावलोकितः। असीति त्वमर्थमव्ययम्। वारिचक्रे जलप्रवाहे वृथा परिक्रामसि निष्फलमेव परितः सञ्चरसि। चक्रायुधो विष्णुस्तु प्रविचीयतेऽन्विष्यते चेत्तर्ह्यायाहि आगच्छ। मायाविनं मायाशालिनमेनमहमीक्षयामि तव दर्शयामि। तस्य मायावित्वादेवादर्शनमिति भावः॥ ४४॥

त्वया सनाथामपि भूतधात्रीं
पोत्रीभवन्नेष हरत्यशङ्कम्।
पञ्चाननेनेव जिघृक्ष्यमाणां
मृगीं निगूढप्रसरः सृगालः॥ ४५॥

त्वयेति। एष चक्रायुधः त्वया सनाथां नाथवतीमपि (भूतधात्रीम्) अशङ्कं शङ्कां विना पोत्रीभवन् मायावराहो भूत्वा हरति स्वीकरोति। न त्वहरदिति इदानीं हरणक्रिया प्रवर्तते इति भावः। कथमिव। पञ्चाननेन सिंहेन जिघृक्ष्यमाणां (हर्तुं ? ग्रहीतु,मिष्यमाणां मृगीं निगूढप्रसरो निभृतसञ्चारः सृगाल इव क्रोष्टेव। उपमया च धात्रीहर्तुः साहसिकत्वमुपन्यस्तम्॥ ४५॥

यदादिमध्यान्तदशात्रयेषु
कालेषु न भ्रश्यति दृश्यमानम्।
घटेत तत्रैव समीक्ष्यकारी
धर्म्येऽप्यधर्म्येऽपि हि कार्यजाते॥ ४६॥

यद् इति। यत्कार्यजातं कृत्यप्रचयः आदिर्मध्यमन्तश्च इति यद् दशात्रयं अवस्थात्रितयं तद्वत्सु कालेषु दृश्यमानं पर्यालोच्यमानं सत् न भ्रश्यति न परिच्युतं भवति। कार्यं पुनरुचितमनुचितं वेति न विचार इत्याह धर्म्येऽप्यधर्म्येऽपीति। धर्मादनपेते अपेते वा। तत्रैव तस्मिन्नेव कार्ये। आरम्भे मध्येऽवसाने च यन्निर्बाधं भवति तस्मिन्नेव कार्ये विचारवान् प्रयतेतेत्यर्थः। हि यस्मादर्थे। यदीदमीदृशं तस्मादहं ब्रवीमीति तात्पर्यम्। अतस्त्वयास्मिन् प्रस्तुते कार्ये नोदासितव्यमिति भावः॥ ४६॥

प्रवर्तमानः प्रथमं क्रियासु
प्रवर्द्धमानाभिनिवेशचेताः।

क्षतासु तासु क्वचिदप्रहृष्टो
निवर्तते यः स पुमाननमान्यः ॥ ४७ ॥

प्रवर्तमान इति । यः प्रवर्धमानाभिनिवेशं प्रकर्षेण वर्धमानतात्पर्यं चेतो यस्य तादृशः पुमान् क्रियासु कार्येषु प्रथमशब्दो प्रवर्तमान उद्युक्तः सन् क्वचिद्विषये तासु स्वयमारब्धासु क्रियासु क्षतासु भग्नासु सतीषु अप्रहृष्टोऽसन्तुष्टः । निर्विण्णो भूत्वेत्यर्थः । निवर्तते ताभ्यः क्रियाभ्यो विरम्य तूष्णीं तिष्ठति ; स तादृशः पुमाननमान्यः निन्दनीयः । तादृशं पुरुषं न कोऽप्याद्रियत इत्यर्थः । त्वया तादृशेन न भवितव्यमिति प्रस्तुतमप्रस्तुतेन द्योत्यते । सामान्यतो विशेषावगतिरूपोऽयमप्रस्तुतप्रशंसा ॥ ४७ ॥

निजेच्छया वा परचोदनाद्वा
बलीयसा यद्विहितं बलेन ।
विवेकिने स्यादहितं हितं वा
पुनस्ततो न व्यपवर्तितव्यम् ॥ ४८ ॥

निजेति । बलीयसा बलवता पुरुषेण निजेच्छया स्वेच्छया परकर्तृकाच्चोदनात् प्रेरणाद्वा बलेन हठेन यद्विहितं कार्यमारब्धं तत् कार्यं तु विवेकिने विचारशालिने जनाय हितमनिष्टं वा स्यात् । यद्वा तद्वा भवतु तन्न विचारणीयमित्यर्थः । सर्वथा ततस्तस्मात्कार्यात् पुनर्न व्यपवर्तितव्यं न निवर्तितव्यम् । तत्रैव नितरामभियुक्तेन भाव्यमित्यर्थः । यदाहुः—

'प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्ननिहता विरमन्ति मध्याः ।
विघ्नैः पुनःपुनरपि प्रतिहन्यमानाः
प्रारब्धमुत्तमगुणा न परित्यजन्ति' । इति ॥ ४८ ॥

पुनरपि प्रोत्साहयति —

सखे हिरण्याक्ष समाहृतायास्
त्वया बलादेव वसुन्धरायाः ।
प्रत्याहृतिं कुर्वति सर्व एव
प्रियङ्करे वैरिणि को विचारः ॥ ४९ ॥

सखे इति । हे सखे हिरण्याक्ष, त्वया सह सखित्वादेव ते हितं ब्रवीमीति भावः । त्वया बलादेव भुजबलेनैव समाहृतायाः वसुन्धरायाः भूमेः सर्वेषां देवानां प्रियङ्करे हितकारिणि वैरिणि विष्णौ प्रत्याहृतिं कुर्वति प्रत्याहरणं कुर्वाणे सति को विचारः तन्निग्रहः कर्तव्यो वेति विचारः कीदृशः स्यात् । स विचारो न कर्तव्य इत्यर्थः ॥ ४९ ॥

क्षमेत गन्धद्विरदः प्रमादात्
कदाप्यनिच्छन्नपि शृङ्गभङ्गम् ।
न त्वादृशः कोऽपि सहेत वीरः
शत्रोः सकाशादभिमानभङ्गम् ॥ ५० ॥

क्षमेतेति । गन्धद्विरदो मतङ्गजः कदापि समये प्रमादा(दन)वधानत्वा-द्धेतोरनिच्छन्नपि शृङ्गभङ्गं निजदन्तकुन्तनमन्येन कृतं क्षमेत सहेतेत्यपि संभावनीयम् । शृङ्गभङ्गमिति दन्तस्य स्थौल्यदैर्घ्यविवक्षया शृङ्गत्वेनाध्यव-सायादतिशयोक्तिः । तथापि (ता? त्वा)दृशः कोऽपि भवत्समानधर्मा वीरः कोऽपि शत्रोः सकाशादभिमानभङ्गं निजमानक्षयं न सहेत न क्षमेत । स्वहृतस्य वस्तुनोऽन्येन यत्प्रत्याहरणं ततोऽधिकः कोऽवमानस्तवास्तीति भावः ॥ ५० ॥

सर्वथा मानभङ्गो न पथ्य इत्याह—

अन्यस्य कामं द्रविणोत्करस्य
त्यागो यशः संप्रचिनोति पुंसः ।
अमुष्य तु प्रत्युत माननाम्नो
ह्यत्याग एवातितरां यशस्यः ॥ ५१ ॥

अन्यस्येति । अन्यस्य वक्ष्यमाणादितरस्य द्रविणोत्करस्य धनसञ्चयस्य त्यागो विनियोगः दानमिति यावत् । पुंसो यशः कीर्तिं संप्रचिनोति सम्य-ग्वर्धयति । कामं तथास्तु । अमुष्य माननाम्नोऽभिमानसंज्ञस्य द्रविणोत्क-रस्य प्रत्युत विपरीतमेव । अत्याग एवावर्जनमेवातितरां यशस्यः । यशसे भवतीति यशस्यः कीर्तिप्रदो भवति । हिरत्र प्रसिद्धौ ॥ ५१ ॥

अखण्ड्यमानामियतोऽपि काला-
दनन्यसाधारणभावबन्धाम् ।
स्वयं गृहीतामभिमानवत्तां
मास्म त्यज त्वं महिषीमिव स्वाम् ॥ ५२ ॥

अखण्ड्येति । इयतः कालानपि । अत्यन्तसंयोगे द्वितीया । एव्वतीतेषु सर्वत्रेत्यर्थः । अखण्ड्यमानामभज्यमानाम् अक्षतपूर्वाम् । अन्येष्वपि न भवतीत्यनन्यसाधारणो भावबन्धः सत्या स्थिरत्वं यस्यास्ता- स्वयं गृहीतामात्मनैवावलम्बितामभिमानवत्तामभिमानशालित्वं त्वं मा ः मा परित्याक्षीः । अत्रोपमानमाह—त्वां महिषीं प्रियतमामिवेति । अखण्ड्यमानां 'खण्डितेर्ष्याकषायिता' खण्डनमप्रापितामित्यर्थः । ऽनुरागः । स्वयंगृहीतां परिणीतामिति व्याख्येयम् ॥ ५२ ॥

ारदवचनमुपसंहरति—

> इति ब्रुवाणे कलहोपपाद-
> क्रियाप्रवीणे करलग्नवीणे ।
> मुनौ तदावेदितमार्गगामी
> चचाल रोषज्वलितोऽसुरेन्द्रः ॥ ५३ ॥

तीति । कलहस्य केलरुपपादक्रियायामुत्पादने प्रवीणे विदग्धे णे करधृतवल्लकीके मुनौ नारदे इत्येवं ब्रुवाणे प्रोत्साहनरूपं वति सति रोषेण शत्रुविषयामर्षेण ज्वलितो दीप्तोऽसुरेन्द्रस्तेन मुनि- । ज्ञापितेन मार्गेण गन्तुं शीलमस्येति तथा सन्चचाल प्रस्थित- ५३ ॥

> क्वासावहो विष्णुरनिष्टमेवं
> कुर्वन्मम क्वैष गमिष्यतीति ।
> जल्पन्मुहुर्मुक्तघनाट्टहासो
> रुरोध तं दंष्ट्रिणमुज्जिहानम् ॥ ५४ ॥

क्वेति । असौ विष्णुः क्व । वर्तत इति शेषः । अहो कष्टम् । एष धात्रीप्रत्याहरणरूपं ममानिष्टमप्रियं कुर्वन् क्व गमिष्यति । (त ? क)- देशे जीवितुकामः प्रयास्यति इति जल्पन् प्रलपन् मुहुरसकृन्मुक्त- उच्चैःशब्दमुत्सृजन् । उज्जिहानं धरणीमादायोद्गच्छन्तं सलिल- ज्जन्तं तं तथाभूतं दंष्ट्रिणमादिवराहरूपं भगवन्तं रुरोध निरुद्ध- ५४ ॥

क्व यासि मिथ्यामृग! तिष्ठ तिष्ठ
प्राप्तो ममाक्ष्णोः पथि दैवयोगात् ।
न मोक्ष्यसे हन्त! कियच्चिरं त्वा-
मस्मिन् जगत्येष गवेषयामि ॥ ५५ ॥

क्वेति । मिथ्यामृग मायावराह क्व यासि कुत्र गच्छसि । तिष्ठ तिष्ठ । दैवयोगान्ममाक्ष्णोः पथि चक्षुर्मार्गे प्राप्तस्त्वं न मोक्ष्यसे मया नोपेक्ष्यसे । हन्त-महत्कष्टमिदम् । एषोऽहं त्वामस्मिन् जगति कियच्चिरं कियन्तं कालम् । बहुकालमित्यर्थः । गवेषयाम्यन्विच्छामि ॥ ५५ ॥

गदाभिघातत्रुटितोत्तमाङ्गा-
द्विनिर्गलद्भिर्भवतः कबन्धात् ।
उद्घूर्णदर्णोनिधितोयमुच्चै-
रुत्कूलयामो रुधिरप्रवाहैः ॥ ५६ ॥

गदेति । अर्णोनिधितोयं समुद्रजलं रुधिरप्रवाहैर्लोहितप्रबन्धैर्वयमुत्कूलयामः उल्लङ्घितकूलं करिष्यामः । कीदृशैः । गदाभिघातेन त्रुटितोत्तमाङ्गात् खण्डितमस्तकाद् भवतः कबन्धादपमूर्धकलेबराद् विनिर्गलद्भिः निपतद्भिः । संभूय समुद्रं प्रविशद्भिरित्यर्थः । अर्णोधितोयं तु उच्चैरुद्घूर्णदुत्पतदुच्चालितं कृत्वोत्कूलयाम इति संबन्धः ॥ ५६ ॥

विश्वैकवीरेण वसुन्धरेयं
मया जिता मर्त्यकुलप्रतिष्ठा ।
प्रवीरहीरैकवशंवदाद्य
कथं नु भूदार तवास्तु दाराः ॥ ५७ ॥

विश्वेति । हे भूदार ! भुवं दारयतीति भूदारः । दुःस्वभावशालीति भावः । विश्वैकवीरेण वीरगणनायामद्वितीयेन मया जितेयं वसुन्धरा स्ववशीकृतेयं भूमिः । कीदृशी । मर्त्यकुलस्य । इदमुपलक्षणं नगमृगाद्यचराचरभूतप्रपञ्चस्य । प्रतिष्ठा आस्पदम् । प्रवीराः प्रधानवीरास्तेषां मध्ये हीरस्य विशेषभूतस्य एकस्य केवलस्य वशंवदा अधीना । आदृशीयं तव दाराः कथमस्तु । कदापि दुर्बलस्य तवाधीना न भविष्यतीत्यर्थः । भूदारशब्द (स्तु ? स्तु) र्भूर्दारा यस्येति नात्र व्युत्पत्तिः । भुवं दारयतीत्येव ॥ ५७ ॥

जिजीविषुश्चेदसि तर्हि पोत्रिन्!
धात्रीं जहन् गच्छ वनं विनीतः ।
वयं कृतागस्स्वपि सानुताप-
मासेवमानेषु न दण्डधाराः ॥ ५८ ॥

जिजीविषुरिति । हे पोत्रिन् वनमृग ! त्वं जिजीविषुः जीवितुमिच्छुरसि चेत्तर्हि धात्रीं जहन् भूमिमुत्सृजन् विनीतो विनयवान् वनं गच्छ स्वास्पदं विपिनगह्वरमेव प्रविश । वयं कृतागस्स्वपि कृतापराधेष्वपि जनेषु सानुतापं पश्चात्तापयुक्तं यथा भवति तथा सेवमानेषु आश्रयत्सु सत्सु न दण्डधाराः दण्डो निग्रहस्तं न कुर्म इत्यर्थः । इदमेकं तवागः सहिष्याम इति भावः ॥ ५८ ॥

पक्षान्तरमाह—

अथात्मवक्त्रोद्धृतपोत्रशस्त्रः
सत्रासि सङ्ग्रामयिषुर्मया चेत् ।
घटस्व योद्धुं मृगयाविनोदो
न हि प्रभूणामतिलाघवाय ॥ ५९ ॥

अथेति । मया सत्रा मया सह अथवासि सङ्ग्रामयिषुः सङ्ग्रामयितुमिच्छुश्चेत्तर्हि घटस्व योद्धुं चेष्टस्व । ननु निरायुधः कथमहं गदायुधेन त्वया सह सङ्ग्रामय इति चेदत्राह— आत्मवक्त्रेण स्वमुखेनैवोद्धृतं पोत्रमेव स्वदंष्ट्रैव शस्त्रमायुधं येन तथाभूतस्त्वम् । त्वद्वधोऽपि मम नातिलाघवाय भवेदित्याह—प्रभूणां प्रभवतां राज्ञां मृगयाविनोदो मृगरमणरूपः क्रीडामयः कालक्षेपोऽतिलाघवायातिक्षुद्रत्वाय (न) हि भवति । 'मारयन्ति मृ(गासु? गयासु) धन्विनो जन्तुजातमपि' इति वचनादिति भावः । हिरत्र हेतौ ॥ ५९ ॥

अङ्गानि ते मेदुरमांसभृन्ति
गदाप्रहारेण विदारितानि ।
ग्राहा अमी सम्प्रति सङ्गसन्तः
सौहित्यदुःस्थां दधतामवस्थाम् ॥ ६० ॥

अङ्गानीति । सम्प्रतीदानीममी दृश्यमाना ग्राहा नक्रास्तेऽङ्गानि तव शरीरावयवान् सङ्गसन्तो भक्षयन्तः सौहित्येनात्युदरपूरणेन दुःस्थामवस्थां दधतामनुभवन्तु । कीदृशान्यङ्गानि मेदुराणि । प्रवृद्धानि मांसानि बिभ्रतीति तद्भृन्ति ।

गदाप्रहारेण विदारितानि विभिन्नानि । गदाप्रहृतिविच्छिन्नत्वाद् बहिर्निर्गलतमांसमेदोवसापरिप्लुतानीत्यर्थः ॥ ६० ॥

इत्युत्कटोद्भ्रामरभूरिवाचं
मदाद्गदायोधिनमापतन्तम् ।
गदायुधस्तं निरुरोध पोत्री
यथापुरं स्थापितभूमिभागः ॥ ६१ ॥

इतीति । पोत्री भगवानादिसूकरः यथापुरं पूर्वं यथा तथैव स्थापितः स्थिरीकृतो भूमिभागो येन तथा सन् गदायुधस्तं हिरण्याक्षं निरुरोध निरुद्धवान् । कीदृशम् ? इति एवंप्रकारम् उत्कटाः क्रूराः उद्भ्रामरा भयङ्करा भूरयो बहुप्रकाराश्च वाचो यस्य । मदाद्गर्वाद्धेतोः गदायोधिनं गदया युध्यमानमापतन्तमाभिमुख्येनागच्छन्तम् ॥ ६१ ॥

विचित्रचक्रभ्रमणप्रवीणौ
मिथोऽभिमर्मं प्रणिजघ्निवांसौ ।
पदाभिघाताकुलिताब्धिशैला-
वयुध्यतां पोत्रिवरासुरेन्द्रौ ॥ ६२ ॥

विचित्रेति । पोत्रिवरोऽसुरेन्द्रश्च तौ । विचित्रे नानाप्रकारे चक्रभ्रमणे मण्डलसञ्चारे प्रवीणौ कुशलौ । मिथोऽन्योन्यमभिमर्मं मर्मणि । अनश्च इति (चे? टच्) समासान्तः । प्रणिजघ्निवांसौ प्रहारं कृतवन्तौ । पदाभिघातेनाकुलिताश्चालिता अब्धयः शैला याभ्यां तथा सन्तौ । अयुध्यतां युद्धं कृतवन्तौ । अयुध्यतामित्यस्य परस्मैपदयुक्तिरुक्तैव ॥ ६२ ॥

परस्पराघातविशीर्णकोटी
गदे परित्यज्य गरिष्ठवीर्यौ ।
तलातलिप्रायमुपाक्रमेता-
मनीकमेतावतिघोरघोरम् ॥ ६३ ॥

परस्परेति । एतौ पोत्रिवरासुरेन्द्रौ गरिष्ठवीर्यौ गुरुतरपराक्रमौ परस्पराघातेनान्योन्यप्रहारेण विशीर्णकोटी जर्जरिताग्रे गदे परित्यज्य किमनयोस्पर्धेय तलातलिप्रायं तलैः तलैः प्रहृत्य प्रवृत्तं युद्धं तलातलि । तत्प्रायं

बाहुल्येन तन्मयं अतिघोरघोरमत्यन्तभयङ्करमनीकं द्वन्द्वयुद्धसुपाक्रमेतां प्रारब्ध-वन्तौ ॥ ६३ ॥

हर्षप्रकर्षप्रविधूनितेन
बन्धश्लथाकीर्णजटेन मूर्ध्ना ।
सम्भावयामास तयोर्नियुद्धं
हिरण्यगर्भाङ्कभवो मुनीन्द्रः ॥ ६४ ॥

हर्षेति । हिरण्यगर्भस्य ब्रह्मणोऽङ्काद् भवो जननं यस्य स मुनीन्द्रो नारदस्तयोः पुण्डरीकाक्षहिरण्याक्षयोर्नियुद्धं द्वन्द्वयुद्धं हर्षप्रकर्षात् प्रीत्यतिशयात् प्रविधूनितेन प्रकम्पितेन । अत एव बन्धाद् बन्धनात श्लथाभिः शिथिलाभि-राकीर्णाभिर्व्याप्ताभिर्जटाभिरुपलक्षितेन मूर्ध्ना मस्तकेन सम्भावयामास श्लाघित-वान् । स्वप्रोत्साहनं फलितमिति हर्षः ॥ ६४ ॥

भयोदितोत्कम्पघनस्तनीभि-
र्गाढोपगूढैर्मुहुरप्सरोभिः ।
समीकसन्दर्शनसाभिलाषै-
र्निरन्तरा द्यौरभवन्निलिम्पैः ॥ ६५ ॥

भयेति । समीकसन्दर्शने युद्धावलोकने साभिलाषैरिच्छाशालिभि-र्निलिम्पैर्देवैर्द्यौरम्बरमार्गो निरन्तरा निबिडाभूत् । कीदृशैः । भयात्त्रासादुदित उद्भूत उत्कम्पो वेपथुर्ययोस्तौ च घनौ कठिनौ च स्तनौ यासां तादृशीभि-रप्सरोभिर्देवीभिः मुहुरनेकवारं गाढोपगूढैर्दृढतरमाश्लिष्टैः । एतेन तेषां सौभा-ग्यातिशयो व्यज्यते ॥ ६५ ॥

अथासुरेन्द्रः समरे ससर्ज
प्रकारबाहुल्यदुरासदानि ।
मायामयान्यक्षतवक्षरक्ष-
स्तार्क्ष्यपक्षीण्यसुहृच्छतानि ॥ ६६ ॥

अथेति । अथानन्तरं असुरेन्द्रो हिरण्याक्षः समरे द्वन्द्वयुद्धमध्ये मायामयानि मायया निर्मितान्यात्तस्वरूपाण्यसुहृदां शत्रूणां शतानि समूहान् ससर्ज सृष्टवान् । कीदृशानि । प्रकाराणां स्थूलत्वनीलत्वह्रस्वत्वदीर्घत्वकृशत्व-

ताम्रत्वधूम्रत्वादिस्वरूपाणां बाहुल्येन बहुत्वेन दुरासदानि दुरभिभवानि। अक्षता भङ्गरहिता यक्षादयो येषु। 'तरक्षुस्तु मृगादनः' इत्यमरः। व्याघ्रविशेषास्तरक्षवः॥ ६६॥

स्मृतोपहूते हरिसूकरेण
　स्फुरत्प्रभामण्डलदुर्निरीक्षे।
सुदर्शने तानि जवादवापु-
　र्भङ्गं पतङ्गा इव हव्यवाहे॥ ६७॥

स्मृतेति। हरिसूकरेणादिवराहेण स्मृतोपहूते पूर्वं स्मृते पश्चादुपहूते। स्मरणेन सन्निधापित इत्यर्थः। स्फुरता प्रकाशमानेन प्रभामण्डलेन मण्डलाकारया प्रभया दुर्निरीक्षे द्रष्टुमशक्ये ................॥ ६७॥

तरसैव शूलमसुरेण चोदितं
　शकलीचकार युधि तेन सूकरः।
ज्वलति प्रकाममहिमांशुमण्डले
　क्व पुनश्चकास्ति कुलमन्यतेजसाम्॥ ६८॥

............सुदर्शनेन युधि तरसैव क्षिप्रं शकलचिकार चूर्णीकृतवान्। अत्र दृष्टान्तमाह — अहिमांशुमण्डले सूर्यबिम्बे प्रकाममत्यर्थं ज्वलति सति अन्यतेजसां नक्षत्रादीनां कुलं वृन्दं क्व चकास्ति। क्वापि न प्रकाशत इत्यर्थः। मञ्जुभाषिणी नाम वृत्तमिदम्।

'सजौ सजौ गुरुश्चैको यत्र सा मञ्जुभाषिणी।'

इति॥ ६८॥

पादाङ्गुष्ठेन विद्धो विधिवचनसमाकर्णनात्कर्णमूले
　लीलाभूदारवीरेण स दनुजभटः पातितो भूतधात्र्याम्।
वक्त्रप्रोद्वान्तभूरिक्षतजभरझरीचर्चितोत्तुङ्गगात्रः
　सुत्राम्णा वज्रभिन्नः कुहरपरिगलद्धातुदिग्धो यथाद्रिः॥ ६९॥

पादेति। लीलाभूदारवीरेण क्रीडावराहवपुषा भगवता विधेर्ब्रह्मणो वचनस्य कर्णमूले प्रहर्तव्यमित्युपदेशस्य समाकर्णनाद्धेतोः पादाङ्गुष्ठेन कर्णमूले

विद्धः प्रहृतः स दनुजभटो हिरण्याक्षो वक्त्रादास्यकुहरात् प्रोद्भ्रान्ताभिरुद्गलिताभिर्भूरीभिर्बह्वीभिः क्षतजभरझरीभिरसृक्प्रवाहरूपैः निर्झरैश्चर्चितं लिप्तमुत्तुङ्गमुन्नतं गात्रं यस्य तथा सन् भूतधात्र्यां भूमौ पातितः क्षिप्तः । सुत्राम्णा वज्रिणा वज्रेण भिन्नः कृत्तपक्षः कुहरेभ्यः परिगलद्भिर्निपतद्भिर्धातुभिर्मनःशिलादिपङ्कैर्दिग्धोऽद्रिः शैलो यथा पात्यते तद्वदिति सम्बन्धः ॥ ६९ ॥

अवतारवृत्तमिदमुपसंहरति —

एवं भूवलयं जवादविलयं कृत्वा प्रतिष्ठापयन्
प्राज्ञैर्यज्ञतनुर्महामुनिवरैः संस्तूयमानो भृशम् ।
वैकुण्ठं विदुषामकुण्ठतपसामासाद्यमासेदिवा-
नव्याद्दिव्यवराह एष भवतो देवः स नारायणः ॥ ७० ॥

एवम् इति । एवमुक्तप्रकारं भूवलयं भूचक्रवालं जवात् क्षिप्रमविलयं नाशरहितं कृत्वा प्रतिष्ठापयन् शत्रून् निहत्य यथास्थानं दृढीकुर्वन् प्राज्ञैर्विद्वद्भिर्महामुनिवरैर्दिव्यैर्महर्षिभिर्यज्ञतनुरिति यज्ञरूपावयवो भगवान् वराह इति भृशमत्यर्थं संस्तूयमानः सम्यक् प्रशस्यमानः सन् अकुण्ठतपसामव्याहततपश्चर्यानिरतानां विदुषां ब्रह्मवादिनामासाद्यं प्राप्तुमर्हं वैकुण्ठं नाम स्वास्पदमासेदिवान् प्राप्तः । एष एवंभूतो देवो दिव्यवराह आदिवराहरूपो नारायणः भगवान् भवतः सामाजिकानव्याद्रक्षतु । सर्वेषामपि मङ्गलं सम्पादयत्वित्याशीर्वचनमिदम् ॥ ७० ॥

इति विष्णुविलासे वराहावतारो नाम
तृतीयः सर्गः ।

---

## चतुर्थः सर्गः ।

क्रीडावराहवपुषा मधुसूदनेन
व्यापादितस्य दनुजस्य किलानुजन्मा ।
वीरो हिरण्यकशिपुः स हिरण्यगर्भ-
माराद्धुमारभत घोरतपोमहिम्ना ॥ १ ॥

क्रीडेति । अथ नरसिंहावतारं प्रस्तौति क्रीडावराहवपुषेत्यादिना । स वीरो हिरण्यकशिपुः हिरण्यगर्भं घोरतपोमहिम्ना आराद्धुमारभत इत्यन्वयः । सः प्रसिद्धः वीर उत्साहशाली हिरण्यगर्भं ब्रह्माणं घोरेण अत्युग्रेण तपो-महिम्ना तपःसम्पदा साधनेन आराद्धुं अर्चयित्वा प्रसादयितुमारभत प्रारब्ध-वान् । कीदृशः । क्रीडावराहवपुषा क्रीडया वराहरूपं दधता मधुसूदनेन व्यापादितस्य हिंसितस्य दनुजस्य हिरण्याक्षस्यानुजन्मा सहोदरः । किलेति प्रसिद्धिद्योतकम् । अग्रजघातिनो निग्रहार्थमुग्रतपसा वरग्रहणसमग्रोत्साहशालि-त्वमस्य वीरशब्देनोपन्यस्तम् ॥ १ ॥

गोकर्णनाम शुचि मन्दिरमिन्दुमौले-
राकर्णनेऽपि हि तमोपहमङ्गभाजाम् ।
ब्रह्माच्युताद्यखिलदैवतसेवितं तद्
जिह्माशयोऽपि स शिवप्रवणोऽभिपेदे ॥ २ ॥

गोकर्णेति । गोकर्णनाम शुचि इन्दुमौलेः तन्मन्दिरमभिपेदे इत्य-न्वयः । स हिरण्यकशिपुः शुचि शुद्धमिन्दुमौलेर्महाबलनाम्नो महादेवस्य मन्दिरं क्षेत्रं प्रपेदे प्राप्तवान् । तदिति प्रसिद्धतममित्यर्थः । कीदृशम् । हि यत्र यदित्यर्थे । यन्मन्दिरम् आकर्णनेऽपि श्रवणमात्रे सत्यपि अङ्गभाजां शरीरिणां तमोपहमज्ञाननिरासकम् । दुरितहरमित्यर्थः । किं पुनः दर्शनादिति भावः । 'अपे क्लेशतमसोः' इति साधुः । ब्रह्माच्युतादिभिर्वेधोविष्णुप्रमुखै-रखिलदैवतैः सर्वसुरसमूहैः परितः स्थितैरुपाश्रितम् । सः कीदृशः । जिह्माशयः कुटिलहृदयः सन्नपि शिवे श्रीपरमेश्वरे भगवति प्रवणः प्रह्वः भक्तिविशेषशाली । अथवा शिवे शुभे तपोरूपे वस्तुनि प्रवणो निश्चितमना इत्यर्थः ॥ २ ॥

पञ्चाननप्रतिसमोऽपि शमोपशोभी
पञ्चापि बाह्यकरणानि विजित्य वीरः ।
पञ्चायुधारिभवनोपवनप्रदेशे
पञ्चाग्निमध्यवसतिः स तपश्चकार ॥ ३ ॥

पञ्चेति । सः वीरो हिरण्यकशिपुः पञ्चाननस्य सिंहस्य प्रतिसमः प्रतिनिधिः तुल्य इत्यर्थः । तथा सन्नपि शमेन प्रशान्त्या उपशोभितुं शीलम-स्येति शमोपशोभी । पञ्च बाह्यकरणानि चक्षुरादीनि बाह्येन्द्रियाणि पञ्चापि विजित्य विषयेभ्यः समाहृत्य वशीकुर्वन् पञ्चायुधारेः परमेश्वरस्य भवने क्षेत्रे यदुपवनं बाह्योद्यानं तस्मिन् प्रदेशे पञ्चानामग्नीनां मध्ये वसतिः स्थितिर्यस्य तथा स(न्) तपश्चकार तपः समारब्धवान् ॥ ३ ॥

स्रष्टारमिष्टवरलाभकृताभिलाष-
स्तुष्टाव दृष्टफलसन्ततिना स्तवेन ।
अष्टाङ्गयोगजयघोरवराकभेद-
स्पष्टाङ्गशोषणविशेषसमिद्धतेजाः ॥ ४ ॥

स्रष्टारम् इति । स हिरण्यकशिपुरिष्टस्याभिलषितस्य वरस्य लाभे विषये कृताभिलाषः कृतप्रार्थनः । दृष्टा परीक्ष्य ज्ञाता फलसन्ततिः फलप्राप्तिर्यस्मिंस्ता-दृशेन स्तवेन स्तोत्रेण स्रष्टारं ब्रह्माणं तुष्टाव स्तुतवान् । स कीदृशः । अष्टाङ्गानि यमनियमासनप्राणायामप्रत्याहृतिधारणाध्यानसमाधयः' तेषां जयेनाभ्यासवशाद्व-शीकरणेन घोरेणातिदुश्चरेण वराकभेदेन च । वराको नाम मासोपवाससंव-त्सरोपवासादिव्रतविशेषः । तस्य भेदेन प्रकारविशेषसमाचरणेन च स्पष्टेन प्रकाशेनाङ्गशोषणेन शरीरकर्शनेन विशेषसमिद्धमतिशयेन प्रदीप्तं तेजो यस्य स तथोक्तः ॥ ४ ॥

विष्वग्विसृत्वरजटापटलाधिरूढ-
वीरुत्कदम्बदृढकम्बलितोत्तमाङ्गः ।
वल्मीकमध्यमयमध्यवसद् भुजङ्ग-
निर्मोकपङ्कपरिकल्पितयोगपट्टः ॥ ५ ॥

विष्वग् इति । अयं हिरण्यकशिपुर्वल्मीकमध्यमध्यवसत् । वल्मीकेन वलयितोऽभूदित्यर्थः । भुजङ्गानां निर्मोकपट्टेन पट्टाकारेण निर्मोकेन परिकल्पितो विरचितो योगपट्टो (यस्य) । भुजङ्गमुक्ता निर्मोकास्तस्य योगपट्टवदङ्गे प्रणद्धा बभूवुरित्यर्थः । विष्वक् समन्ताद्विसृत्वरं व्यापनशीलं जटापटलं जटाकदम्बकमधिरूढैर्वीरुत्कदम्बैर्लतानिकुरुम्बैर्दृढं कम्बलितं संजातकम्बलम् । आच्छादितमित्यर्थः । उत्तमाङ्गं शिरो यस्य स तथा ॥ ५ ॥

वर्षानिलातपहिमानि समाधिबन्धं
तस्य स्थिरं श्लथयितुं न वि(भुर्व? भूव)भूवुः ।
द्वन्द्वान्यमून्युपरतेन्द्रियजातमेनं
किं वा तुदन्ति परमिन्द्रियतोदकानि ॥ ६ ॥

वर्षेति । वर्षानिलातपहिमानि कर्तॄणि तस्य हिरण्यकशिपोः स्थिरं निश्चलं समाधिबन्धं श्लथयितुं शिथिलीकर्तुं न वि(भुर्व ? भूव)भूवुः प्रभवो न जाताः । अमूनि वर्षातपशीतोष्णानि द्वन्द्वानि उपरतेन्द्रियजातं प्रशान्तेन्द्रियसमूहमेनं हिरण्यकशिपुं किं वा तुदन्ति कथं व्यथयन्ति । तं व्यथयितुं न प्रभवन्तीत्यर्थः । अत्र हेतुमाह — परं केवलम् इन्द्रियतोदकानि इन्द्रियाणामेव व्यथकानि । तोद्यानामभावाद् भित्तेरभावाच्चित्रकर्माणीव निष्फलप्रवृत्तीन्येव जातानीत्यर्थः ॥ ६ ॥

यस्माद्विहङ्गमकुलाय कुलायभूमी-
कृत्यार्पयन्निजजटापटलानि दैत्यः ।
तस्माद्ध्रुवं त्रिभुवनं भवनीचकार
पश्चादसौ बहुफलं खलु दानमाहुः ॥ ७ ॥

यस्मादिति । दैत्यो हिरण्यकशिपुः निजान्यात्मीयानि जटापटलानि जटासमूहान् विहङ्गमकुलाय पक्षिवृन्दाय कुलायभूमीकृत्य नीडरचनास्थानं कृत्वार्पयन् दत्तवान् । भवनदानस्य फलमाह — यस्माद्धेतोरिदं तस्माद्धेतोर्ध्रुवं निश्चितम् । असौ हिरण्यकशिपुः पश्चादुपरि काले त्रिभुवनं भवनीचकार निजभवनमेव कृतवान् । इदं हि भूदानफलमिति भावः । समर्थयते दानं बहुफलमाहुरिति । खल्ववधारणे ॥ ७ ॥

तस्य स्थिरव्रतबलस्य तपोमयाना-
मत्याग्निसूर्यमहसां महसां प्रपञ्चैः ।
उच्चैरदीप्यत यदा जगदण्डकुण्डं
तस्मै तदा वरमदित्सदजोऽगतिः सन् ॥ ८ ॥

... .... .... .... ... ... .... ... ... ... ... ....

महसां प्रपञ्चैः प्रबन्धैः कर्तृभिर्यदा यस्मिन् काले जगदण्डकुण्डं ब्रह्माण्डकटाह उच्चैरत्यर्थमदीप्यत प्रज्वलितम् । तदा तस्मिन् काले अजो ब्रह्मा अगतिर्वरप्रदानादन्या गतिर्नास्तीति विदन्नित्यर्थः । तथा सन् तस्मै हिरण्यकशिपवे वरमनुग्रहमदित्सद् दातु(मग ? मै)च्छत् । (परस्मै ? वरमस्मै) प्रदास्यामीति निश्चितवानित्यर्थः ॥ ८ ॥

गत्वा हिरण्यकशिपोः स रिपोरपि द्रा-
गाविर्बभूव पुरतः स्फुरदात्मकान्तिः ।
वैरं न दर्शयति किञ्चन कैरवस्या-
प्यग्रे प्रकाशमुपयाति हि भानुमाली ॥ ९ ॥

... ... ... वैरं स्वाभाविकमपि न दर्शयति न प्रकाशयति । स्वपक्षस्य पद्माकरस्येव विपक्षस्य कुमुदाकरस्याप्यग्रे समप्रकाशो भवतीत्यर्थः । हिर्हेतौ । अनेनास्य ब्रह्मणो लोकोत्तरगाम्भीर्यातिशयो व्यज्यते ॥ ९ ॥

वल्मीकरन्ध्रमुखतः सुखमुत्थितोऽसौ
व्याकीर्णघूर्णितजटेन ननाम मूर्ध्ना ।
वव्रे वरं च वरदोऽसि यदि प्रसीदन्
यद्यद् वृणोमि वितराशु विरिञ्च तत्तत् ॥ १० ॥

वल्मीकेति । असौ हिरण्यकशिपुः वल्मीकरन्ध्रस्य मुखात् सुखमप्रयासमुत्थितो व्याकीर्णा व्याप्ता घूर्णिताश्चलिता जटा यस्मिंस्तेन मूर्ध्ना ननाम नमस्कृतवान् । ब्रह्माणमिति शेषः । वरं वव्रे प्रार्थितवांश्च । किमिति । हे विरिञ्च ! त्वं प्रसीदन् प्रसन्न(वा)न् वरदोऽसि यदि वरं प्रदातुमागतश्चेत्तर्हि यद्यदभिलषितं वस्तु वृणोमि प्रार्थयिष्ये । (वर्तमानसामीप्यात्) वर्तमाननिर्देशः । प्रार्थनीयानां बाहुल्याद् यत्तदोर्द्विरुक्तिः । तत्तद्वस्त्वखिलं आशु वितर प्रयच्छ । आशिवत्येनेन कियच्चिरं त्वदागमनमेव प्रतीक्ष्य वर्तामह इति द्योत्यते ॥ १० ॥

मर्त्यैरमर्त्यनिकरैरुरगैर्मृगैर्वा
नक्तं दिवा च विशिखादिभिरायुधैर्वा ।
पातालभूमिसुरवर्त्मसु वा न वध्यो
येनाहमेष भवितास्मि वरः स देयः ॥ ११ ॥

मर्त्यैरिति । मर्त्यैर्मनुष्यैरमर्त्यनिकरैर्देवसङ्घैरुरगैः सर्पैर्मृगैः सिंहादिसत्त्वैर्वा नक्तं रात्रौ दिवा दिवसे च विशिखादिभिः । आदिशब्देन खड्गपरशुगदाशूलशक्त्यादयो गृह्यन्ते । एवमादिभिरायुधैः करणैर्वा पाताले भूमौ सुरवर्त्मनि चाधिकरणेषु वा येन वरेणाहं न वध्यो भवितास्मि । अनेन वधस्य करणाधिकरणदेशकालनिरासः कृतः । एषोऽहमित्यात्मनिर्देशः । स तादृशो वरो दातुमर्हः । यत्किञ्चिद्वरं दत्त्वा विसर्जनीयोऽयमिति न मन्तव्यमिति भावः ॥ ११ ॥

सर्वं तथा भवतु वत्स ! यथेच्छसि त्वं
किं वा न दापयति घोरतरं तपस्ते ।
तुष्टो न चेदहमिहापि पुनः क्व तुष्या-
म्येवं निगद्य विधिराशु तिरोबभूव ॥ १२ ॥

सर्वम् इति । हे वत्सेति मिथ्यास्नेहनाटितकेन सम्बुद्धिः । त्वं यथा येन प्रकारेणेच्छसि सर्वं तथा भवतु । तादृक्प्रकारमेवास्तु । घोरतरमत्युग्रं ते तपः किं वा न दापयति किं वस्तु वरदैरस्माभिः प्रयोज्यकर्तृभिः न प्रतिपादयति । सर्वं (यदाभव ? च दापय)तीत्यर्थः । अहमिहाप्येतादृशमहत्तरे तपसि विषयेऽपि न तुष्टश्चेत्तर्हि पुनः क्व तुष्यामि कस्मिन् विषये तुष्टो भविष्यामि । इतः परमन्यत्र तुष्टिस्थानमित्यर्थः । एवं निगद्योक्त्वा विधिर्ब्रह्मा तु तत्क्षणमेव तिरोबभूवान्तर्हितवान् ॥ १२ ॥

सर्वाभिभाविसहजोष्मदुरासदो यः
प्रागेव तादृशवराधिगमात्तु तावत् ।
उच्चण्डतोन्नतिवशादतिदुस्सहोऽसा-
वुच्चैरुदज्वलदुदक्पथगो यथार्कः ॥ १३ ॥

सर्वेति । यो हिरण्यकशिपुः प्रागेव वरलाभात् पूर्वमेव सर्वाभिभाविना सर्वजनानधःकुर्वाणेन सहजेनोष्मणा प्रतापेन दुरासदो दुर्जयः । तावत्तदानीं

तु तादृशस्य सर्वतोऽप्यवध्यरूपस्य वरस्याधिगमाह्लादाद्धेतोरुचण्डताया अति-क्रूरताया उन्नतिवशादुत्कर्षातिशयादतिदुःसहोऽत्यन्तदुर्जयो भवन्नसौ उच्चैरत्य-र्थमुदज्वलदुद्दीप्तभुजपराक्रमोऽभूत् । उदक्पथं गच्छतीत्युदक्पथग उत्तरायण स्थोऽर्को यथा । अत्यन्तदुःसहत्वं साधर्म्यम् । सर्वाभिभावीति विशेषणमत्रापि योज्यम् । उच्चण्डतोन्नतिवशादिति च ॥ १३ ॥

रूपान्तरं धृतवता किल पूर्वजो मे
येन छलेन निहतस्तमहं निहन्मि ।
इत्थं प्रतिश्रुतवतात्मसुहृत्समाजे
तेन क्षणेन भुवनत्रितयं विजिग्ये ॥ १४ ॥

रूपेति । रूपान्तरं धृतवता वराहरूपमातिष्ठता येन विष्णुना मे पूर्व-जोऽग्रजः छलेन व्याजेन निहतः किल हिंसित इति प्रसिद्धोऽयमर्थ इत्यर्थः । तं विष्णुमहं निहन्मि निग्रहीष्यामि । इत्थमेवंप्रकारमात्मसुहृदामसुराणां समाजे सभायां प्रतिश्रुतवता प्रतिज्ञां कृतवता तेन हिरण्यकशिपुना क्षणेन क्षिप्रमेव भुवनत्रितयं त्रैलोक्यं विजिग्ये विजितमासीत् ॥ १४ ॥

निष्कासितो निजपदान्निरवग्रहेण
दैत्याधिपेन मघवानमरैः समेतः ।
लीनो निनाय दिवसान् गिरिकन्दरासु
ख्यातिं तदास्य किमविन्दत कौशिकाख्या ॥ १५ ॥

निष्कासित इति । निरवग्रहेण नितरामप्रतिबन्धप्रसरेण, क्रूरेणेत्यर्थः । दैत्याधिपेन हिरण्यकशिपुना निजपदादात्मीयस्थानात् स्वर्गात् निष्कासितो निराकृतो मघवानिन्द्रोऽमरैः समेतः सहितो गिरिकन्दरासु लीनस्तिरोहितो दिवसान् निनाय । अस्य मघवतः कौशिक इत्याख्या संज्ञा तदा तस्मिन् काले ख्यातिमविन्दत प्रसिद्धिं लेभे । किमित्युत्प्रेक्षा । कौशिक उलूकपक्षी । सोऽपि पर्वतगुहासु लीनो दिवसान् गमयति । तदानीमिन्द्रस्यापि तत्साधर्म्या-त्तत्संज्ञालाभः किं स्यादिति । 'इन्द्रोलूकौ च कौशिकौ' इति निघण्टुः ॥ १५ ॥

क्वासौ स विष्णुरिति धृष्णुरमुं विचिन्वन्
वैकुण्ठलोकमजिहीत दितेस्तनूजः ।
प्राचीनजन्मसमनुस्मरणेन नूनं
तत्राप्यलम्भि स सुलम्भतमप्रचारम् ॥ १६ ॥

क्केति । दितेस्तनूजो हिरण्यकशिपुः धृष्णुर्धृष्टः सोऽसौ तथा प्रसिद्धो मत्पूर्वजघाती विष्णुः क्व कुत्र वर्तत इति अमुं (विचिन्वन्) विष्णुलोकमजिहीत प्राप्तवान् । तस्य योगिभिरपि दुरासदे वैकुण्ठलोके प्रवेशस्य उपपत्तिमुत्प्रेक्षते प्राचीनेति । सोऽसुरस्तत्रापि वैकुण्ठलोकेऽपि सुलम्भतममतिशयेन सुलम्भं प्रचारं सञ्चारं प्राचीनजन्मनः पूर्वजननस्य समनुस्मरणेन सम्यगनुध्यानेन कर्त्रा अलम्भि लम्भितः प्रापितः । कर्मणि चिण् । 'विभाषा चिण्णमुलोः' इति । नूनमहं तर्कयामीति कवेरुत्प्रेक्षा ॥ १६ ॥

स्वस्यान्तरेव स निलीनवता तदानीं
शून्यं विलोक्य हरिणा फणिराजतल्पम् ।
मत्तो भयात् खलु पलायितवानितोऽसा-
वद्धाय विष्णुरिति निश्चिनुते स्म दैत्यः ॥ १७ ॥

स्वस्येति । स दैत्यो हिरण्यकशिपुरिति एवंप्रकारं निश्चितवान् । किंप्रकारम् । असौ विष्णुरत्र शयनशीलो हरिः मत्तो मम सकाशाद् भिया त्रासेन हेतुना इतोऽस्माद् भोगिपर्यङ्कात् पलायितवान् । अद्धाय द्रुतं गतवान् । खलु निश्चितमिति । एवंनिश्चये हेतुमाह — फणिराजतल्पं हरिणा शून्यं तद्रहितं विलोक्येति । कीदृशेन । तदानीं तदागमनसमय एव स्वस्यान्तरेव हिरण्यकशिपोर्मनस्येव निलीनवता निगूढं प्रविश्य स्थितवता । सर्वान्तरात्म-भूतस्य किं दुष्करमिति भावः ॥ १७ ॥

सङ्ग्रामसीमनि हतोऽथ पलायितो वा
सम्यग् जितो ह्युभयथापि जिगीषुणारिः ।
आत्मानमित्थमसुरो जितचक्रपाणिं
मत्वा ततो निववृते महता मदेन ॥ १८ ॥

सङ्ग्रामेति । अरिः शत्रुः सङ्ग्रामसीमनि युद्धाङ्गणे हतो हिंसि-तोऽथवा पलायितो भयाद्विद्रुतो वा । उभयथापि प्रकारद्वयेनापि जिगीषुणा जेतुमिच्छुना पुरुषेण सम्यग् जितः साधु परिभूत एव । हि प्रसिद्धोऽयमर्थः । अतोऽत्र पलायितोऽपि हरिरस्माभिर्जित एवेति भावः । असुरो हिरण्यकशिपु-रित्थम् उक्तप्रकारेणात्मानं स्वं जितश्चक्रपाणिर्येन तथाभूतं मत्वा ततस्तस्मात् प्रदेशान्महता मदेन विष्णुरपि जितं इति गर्वातिशयेनोपलक्षितो निववृते निवृत्तवान् ॥ १८ ॥

तस्मिन्नधत्त समये रमणी तदीया
गर्भं समध्युषितमात्मविदात्मजेन ।
तस्यात्मवित्त्वमधिगर्भमवस्थितस्यै-
वाधायि साधु मुनिना किल नारदेन ॥ १९ ॥

तस्मिन्निति । तस्मिन् समये तादृश्यामवस्थायां तदीया तस्य हिरण्यकशिपो रमणी भार्या गर्भमधत्त धृतवती । कीदृशम् । आत्मानं परमात्मतत्त्वं वेत्तीति तादृशेनात्मजेन पुत्रेणाध्युषितमधिष्ठितम् । तस्यात्मवित्त्वमेव स्फुटयति । अधिगर्भं गर्भे अवस्थितस्य वर्तमानस्यैव पुत्रस्यात्मवित्त्वमात्मतत्त्वं नारदेन मुनिनाधायि सम्यगुपदिष्टम् । किलेति प्रसिद्धौ । साध्विति सम्यगेवेत्यर्थः ॥ १९ ॥

प्राचीव पूर्णहरिणाङ्कमशेषलोक-
प्रह्लादकारणमसूत सुतं तदा सा ।
प्रह्लाद इत्यथ यथार्थममुष्य नाम
क्षेमङ्करं कथयतामपि सम्बभूव ॥ २१ ॥

प्राचीति । सा हिरण्यकशिपोर्भार्या प्राची दिक् पूर्णहरिणाङ्कं पूर्णचन्द्रमिवाशेषाणां लोकानां जनानां प्रह्लादकारणमानन्दहेतुभूतम् । उभयसाधारणमिदम् । तदा तस्मिन् काले असूत प्रसूतवती । अथ जननानन्तरमेवामुष्य सुतस्य प्रह्लाद इति यथार्थम् । ह्लादि सुखे चेति धातुः । सर्वजनसुखहेतुत्वाद(र्थावा?र्थवन्ना)म । कथयतामपि प्रह्लाद इति पठतामपि क्षेमङ्करं कुशलप्रदं सम्बभूव सम्भूतम् । किं पुनस्तद्दर्शनसम्भाषणादिकमनुभूतवतामिति भावः ॥ २० ॥

कान्त्येव साधुजनबोधकृता दिनेशः
शान्त्या सह व्यवृधदाहितविष्णुभक्त्या ।
मैत्र्यादिभिश्चतसृभिश्च स भावनाभिः
स्वस्योपमातृभिरिवानिशमादृतोऽभूत् ॥ २१ ॥

कान्त्येति । दिनेशः सूर्यः कान्त्या स्वतेजसेव साधुजनानां सज्जनानां बोधकृता आत्मज्ञानमुत्पादयन्त्या । सूर्यपक्षे जागरत्वकारिण्या । अहित-

विष्णुभक्त्या आहिता सम्यग्विहिता विष्णुभक्तिर्यया तादृश्या शान्त्या शमगुणेन । अन्यत्र आहितस्य मण्डलान्तर्वर्तिनो विष्णोर्भक्त्या विनयेन प्रवर्तमानयेति बोध्यम् । तादृशशमगुणेन सहैव व्यवृधद् विवृद्धवान् । यथा यथा वपुः पुष्णाति तथा तथास्य विष्णुभक्तिकारी शमगुणोऽपि पुष्टिमध्यगच्छदित्यर्थः । स प्रह्लादश्चतसृभिर्मैत्र्यादिभिर्भावनाभिश्चित्तप्रसादसाधिनीभिरनिशमहर्निशमादृतोऽभूदनुसृतोऽभूत् । मैत्र्यादयस्तु मैत्री, अनुकम्पा, मुदिता, उपेक्षेति चतस्रः । आसां विषयविभागमाह प्रबोधचन्द्रोदये—

'ध्यायन्ति मां सुखिनि दुःखिनि चानुकम्पां
पुण्यक्रियेषु मुदितां कुमतावुपेक्षाम् ।
एवं प्रसादमुपयाति हि रागलोभ-
द्वेषादिदोषकलुषोऽप्ययमन्तरात्मा ॥'

इति । अत्रोपमामाह अस्योपमातृभिरिवेति । उपमातरो धात्र्यः यथार्भकमुपलालयन्त्यः पोषयन्ति तथेत्यस्य मैत्र्यादिष्वत्यन्तानुकूल्यं दर्शितम् ॥ २१ ॥

दृष्ट्वात्मजं कुलविलक्षणशीलमेनं
नातिप्रहृष्टहृदयोऽजनि दानवेन्द्रः ।
आत्मप्रियङ्करगुणप्रवणो हि लोको
नात्मीयतां विचिनुते परकीयतां वा ॥ २२ ॥

दृष्ट्वेति । दानवेन्द्रो हिरण्यकशिपुः कुलविलक्षणं दैत्यकुलविसदृशं शीलं स्वभावो यस्य तादृशमेनमात्मजं दृष्ट्वा नातिप्रहृष्टमनतिसन्तुष्टं हृदयं यस्य तथाजनि जातः । उक्तमर्थं समर्थयते । आत्मप्रियङ्करेषु स्वप्रीतिकारिषु गुणेषु प्रवणस्तत्परो लोकस्तामसराजसप्रियो जनः आत्मीयतामात्मसम्बन्धित्वं परकीयतां परसम्बन्धित्वं वा न विचिनुते नान्विच्छति । न विचारयतीत्यर्थः । हिर्थसादर्थे । अत आत्महितदौरात्म्यादिगुणाभावादस्मिन्नौदासीन्यमिति भावः ॥ २२ ॥

अध्यापिपद् गुरुभिरेनमशेषधर्म-
प्रध्वंसशालि स कुलव्रतमात्मनीनम् ।
यत्तु त्रयीवचनविस्तरमप्रमाणं
*मत्तप्रसुप्तजनजल्पितकल्पमाह ॥ २३ ॥

* 'सुप्तप्रमत्त' इति पाठो व्याख्यानादुपलभ्यते ।

अध्यापिपदिति । स हिरण्यकशिपुरेनं प्रह्लादं गुरुभिः शुक्रादिभिः प्रयोज्यकर्तृभिरात्मनीनम् आत्मनो हितम्। आत्मन्विश्वजनेत्यादिना खः। 'आत्माध्वानौ खे' इति प्रकृतिभावः। अशेषाणां धर्माणां प्रध्वंसेन प्रणाशेन हेतुना शालि श्लाघ्यम् । शल श्लाघायामिति धातुः । कुलव्रतमसुरकुलसमयः । तदध्यापिपद् ग्राहयामास । कीदृशं तदिति चेदत्राह— यत् कुलव्रतं तु त्रयीवचनविस्तरं वेदवाक्यप्रपञ्चमप्रमाणमाह। न प्रमाणमिति ब्रवीति । अप्रमाणत्वे हेतुमाह । सुप्तानां य उत्स्वप्नप्रलापः मत्तानां मद्यपानक्षीबानां यश्चासम्बन्धप्रलापः तत्कल्पं तेन प्रायशस्तुल्यम् । उन्मत्तजल्पितस्तुल्यं वा। न तत्र किञ्चिद् ग्राह्यमस्तीति भावः । इत्याहेति नास्तिकमतानुसारेणोद्घोषयतीत्यर्थः ॥ २३ ॥

प्रह्लादचेतसि विवेकघने विशाले
विद्यावभासिनि विमोहतमोविहीने ।
धर्म्येतरा गुरुगिरोऽपि सरोजपत्रे
जम्बालिताम्बुकणिका इव नाभिलेगुः ॥ २४ ॥

प्रह्लादेति । विवेकेन सदसद्वस्तुविचारेण घने सान्द्रे विशाले विस्ताररशालिनि विद्यया परमार्थज्ञानेनावभासिनि प्रकाशमाने । विमोहो वैचित्त्यम् । तदाहुः — 'मोहस्त्वसत्ये सत्यत्वबुद्धिर्दुःखे सुखभ्रमम् । विनात्मन्यात्मबोधश्च' इति । तद्रूपेण तमसा विहीने विरहिते प्रह्लादस्य चेतसि धर्म्येतरा अधर्मप्रायां गुरूणां गिरोऽपि । अर्थकामावेव पुरुषार्थौ । धूर्तप्रलापस्त्रयीतन्त्रम्। मरणमेवापवर्गः। नास्ति परलोकः। ऐहिकमेव सुखम् । कणिकानां जम्बालितत्वं तास्वात् (?) । यथाब्जपत्रे न लगन्ति तथास्य चेतसि गुरुगिरो नाभिलग्ना बभूवुरित्यर्थः ॥ २४ ॥

पुत्रं कदाचन मुदा स पदावनम्रं
सस्नेहमङ्कमधिरोप्य पितान्वपृच्छत् ।
वत्साभिधत्स्व गुणिनोऽस्य गुरोः सकाशा-
दध्येयवस्तु किमधीतमये त्वयेति ॥ २५ ॥

पुत्रम् इति । स हिरण्यकशिपुः कदाचन कस्मिंश्चिद्दिवसे मुदा तद्विद्याधिगमप्रीत्या पदावनम्रं पदयोः प्रणामशीलं पुत्रं प्रह्लादं सस्नेहं यथा

भवति तथाङ्कमारोप्य पित्रा जनयित्रान्वपृच्छदनुयुक्तवान् । हे वत्स ! अभिधत्स्व कथय । गुणिनो गुणवतोऽस्य गुरोः शुक्रस्य सकाशादद्धयेयमध्येतुमर्हं किं वस्तु त्वयाधीतं तदाभिधत्स्व । अये इति सान्त्वनमाभिमुख्यकरमव्ययम् । इत्येवंप्रकारमपृच्छदिति सम्बन्धः ॥ २५ ॥

> सोऽपि व्यजिज्ञपदभिज्ञतमा यदाप्त्यै
> सर्वात्मना तनुभृतः सततं यतन्ते ।
> एकैव लम्भयति या पुरुषार्थमग्र्यं
> सा विष्णुभक्तिरनघाधिगता मयेति ॥ २६ ॥

सोऽपीति । प्रह्लादोऽपि व्यजिज्ञपद् विज्ञापितवान् । किमिति । अभिज्ञतमा अतिशयेन विद्वांसस्तनुभृतो शरीरिणो यदाप्त्यै यस्या विष्णुभक्तेरधिगमाय सर्वात्मना वाङ्मनःकायप्रवृत्त्या सततमनवरतं यतन्ते यत्नं कुर्वन्ति । किञ्च या विष्णुभक्तिः एका केवलैवान्यसाहाय्यानपेक्षमेवाग्र्यं पुरुषार्थं मोक्षं लम्भयति प्रापयति । भक्तिमन्तमिति शेषः । तदुक्तम् – 'विष्णौ भक्तिः केवला मुक्तिहेतुः' इति । तथाभूता अनघा निर्दोषा अघनाशिनीत्यर्थः । विष्णुभक्तिर्मयाधिगताधीयं दृढीकृता । नात्र कश्चिद्विसंवाद इति भावः । इति व्यजिज्ञपदिति संबन्धः ॥ २६ ॥

> आकर्ण्य कर्णपरुषं तदघूर्णत द्रा-
> गुच्चैर्जहास निटिले भ्रुकुटिं बबन्ध ।
> निस्त्रिंशमाशु निरकोशयदक्षिभासा
> धक्ष्यन्निवैक्षत स रूक्षमुवाच चैनम् ॥ २७ ॥

आकर्ण्येति । स हिरण्यकशिपुस्तद्विज्ञापनं कर्णपरुषं कर्णयोर्दुःसहम् आकर्ण्य श्रुत्वा द्रागघूर्णत क्षिप्रं कम्पितशरीरो बभूव । उच्चैर्जहास हसितवान् । निटिले ललाटे भ्रुकुटिं बबन्ध । आशु निस्त्रिंशं खड्गं निरकोशयद् निष्कोशं कृतवान् । कोशादुद्धृतवानित्यर्थः । अक्षिभासा नेत्रत्विषा धक्ष्यन् दग्धुं प्रवृत्त इव ऐक्षत ईक्षितवान् । रूक्षं क्रूरं यथा तथा एनं प्रह्लादमुवाचोक्तवांश्च ॥ २७ ॥

किं किं ब्रवीषि कुलपांसन हिंसनीयो
बालोऽपि काममसि का ममता ममापि ।
जात्यैव दैत्यकुलवैरिणि यस्य हास्या
भक्तिस्तवाजनि स वा कथमस्यवध्यः ॥ २८ ॥

किमिति । हे कुलपांसन कुलदूषक ! किं किं ब्रवीषि । कोपद्योतिका द्विरुक्तिः । त्वं बालः सन्नपि कामं तथा भवतु । का क्षतिरिति भावः । हिंसनीयो वध्यः । ममापि का ममता ममत्वम् । तवास्मासु ममत्वं नास्त्येव । (तव ? त्वयि) ममापि तथेत्यर्थः । यस्य तव जात्यैव निसर्गत एव दैत्यकुलवैरिणि सुरवंशद्वेषिणि हास्या हसितुं योग्या परिहसनीया भक्तिरजनि सञ्जाता । स वा तादृशस्त्वमथवा कथमवध्योऽसि कथमनिग्राह्यो भवसि ॥ २८ ॥

जिह्रेति किं न रसना पितृपूर्वजस्य
व्यापादके द्विषति भक्तिरितीह वक्तुम् ।
वज्रात्मिकेयमथवा तव विष्णुनाम्ना-
मुच्चारणेऽपि न विदीर्यति याधुनापि ॥ २९ ॥

जिह्रेतीति । पितृपूर्वजस्य तव पितुर्ममाग्रजस्य हिरण्याक्षस्य व्यापादके हिंसितरि द्विषत्यस्मच्छत्रौ विष्णौ इह भक्तिर्विद्यत इति वक्तुं तव रसना जिह्वा किं न जिह्रेति लज्जते । अथवा युक्तमेव वा । तवेयं रसना वज्रात्मिकैव वज्रेण निर्मितेव नियतम् । या रसनाधुनापीदानीमपि विष्णुनाम्नामुच्चारणे सत्यपि न विदीर्यति न सहस्रधा विदीर्यति । अवज्रमयी चेत्तदुच्चारणप्रसङ्ग एवादरिष्यदिति भावः ॥ २९ ॥

प्रह्वामरातिगुणवर्णनसाहसिक्ये
जिह्वां छिनत्तु तव मद्भुजदण्डबन्धुः ।
कृत्तारिगात्ररुधिरासवतीरपाणः
प्राणापहारविधिर्वीतघृणः कृपाणः ॥ ३० ॥

प्रह्वामिति । मद्भुजदण्डयोर्मम दोर्दण्डयोर्बन्धुः सततसंसर्गात् सखा कृपाणः खड्गः । अरातेः शत्रोः विष्णोर्गुणवर्णनमीदृशस्तादृश इति गुणप्रशंसा (तद्)रूपे साहसिक्ये साहसे विषये प्रह्वां प्रवणां तत्परामित्यर्थः । तादृशीं तव जिह्वां छिनत्तु द्विधा करोतु । कामचारानुज्ञायां लोट् । कीदृशः

कृपाणः । कृत्तस्य खण्डितस्यारिगात्रस्य शत्रुशरीरस्य यद्रुधिरं तस्यैवासवस्य मद्यस्य वीरपाणः । 'वीरपाणं तु यत्पानं वृत्ते भाविनि वा रणे' इत्यमरः । तादृक्पानं कृतवान् । किञ्च प्राणापहारविधौ प्राणविनाशकर्मणि वीतघृणो निष्करुणः । अनेनास्य व्यवसिते कर्मणि नास्त्यौदासीन्यमिति दर्शितम् ॥ २० ॥

> कः कोऽत्र भो मम तनूजमपि प्रवृद्धा-
> वात्मद्रुहं निहत दैत्यभटास्तदेनम् ।
> कः संशयोऽत्र भवतां न विलूयते कि-
> मात्मोदयाय गडुरात्मशरीरजोऽपि ॥ २१ ॥

क इति । अत्र कस्कः । वर्तमान इति शेषः । भो दैत्यभटास्तत्तस्माद्धेतोर्मम तनूजमपि पुत्रमपि प्रवृद्धौ सत्यामात्मद्रुहं वर्धमानोऽसावात्मानं मामेव द्रोक्ष्यतीत्यर्थः । एवंविधमेनं प्रह्लादं निहत निगृह्णीध्वम् । हन्तेर्लोटि मध्यमपुरुषबहुवचनमेतत् । अत्रात्मजहनने भवतां कः संशयः । सन्देहो न कर्तव्य इत्यर्थः । अत्र हेतुमाह । आत्मशरीरजोऽपि स्वगात्रसमुद्भूतोऽपि गडुर्मांसोच्छूनतारूपो व्याधिविशेषः । आत्मोदयाय स्वस्य नीरोगतारूपाभ्युदयार्थं किं न विलूयते । किं न छिद्यते । छिद्यत एवेत्यर्थः । अत्रापि प्रवृद्धावात्मद्रुहमिति विभक्ति(वि)परिणामेनानुषज्यते ॥ २१ ॥

> सक्रोधमित्थमभिधाय सुतं विकर्ष-
> न्नङ्कादधिक्षिति तमाक्षिपदक्षमोऽसौ ।
> विद्वानपि स्वहृदयाय न रोचते यो
> जीवोऽयमश्मसदृशः खलु दुष्प्रभूणाम् ॥ २२ ॥

सक्रोधम् इति । असौ हिरण्यकशिपुः सक्रोधं सरोषमित्थमभिधायोक्त्वा अक्षमः क्षमारहितः सुतमङ्काद्विकर्षन् करे गृहीत्वा बलादाकर्षन्नधिक्षिति क्षितौ तमाक्षिपत् प्रक्षिप्तवान् । इदं चास्य साहसकारित्वं समर्थयते । दुष्प्रभूणां दुष्टानां प्र(भूषणतया ? भूणां तु यो) जीवः प्राणी विद्वानपि पण्डितः सन्नपि स्वहृदयाय न रोचते रुचितो भवति । स्ववाञ्छानुगुणो न भवति । सोऽयं जीवोऽश्मसदृशः पाषाणतुल्यः खलु । अश्मानमवनौ क्षेप्तुं कस्यापि न कृपा भवति । तद्वदेवासौ दुष्टः स्वसुतं प्रक्षिप्तवानित्यर्थः ॥ २२ ॥

शूलैर्गदाभिरसिभिर्मुसलैः शिलाभि-
र्दन्तैर्नखैः स्वमभिजघ्नुषि किङ्करौघे ।
प्रीतिप्रसन्नवदनः सरसानपाङ्गान्
माल्यैरिवार्चयति सन्निदधे कुमारः ॥ ३३ ॥

शूलैरिति । कुमारः प्रह्लादः शूलादिभिः स्वमात्मानमभिजघ्नुषि अभितो हननं कृतवति किङ्कराणामोघे समूहे विषये प्रीत्या प्रसन्नवदनः माल्यैः सुरभिमालागणैः स्वमर्चयति जन इव सरसानपाङ्गान् सस्नेहान् कटाक्षान् सन्निदधे समर्पितवान् । अनेनास्य दयागुणातिशय उक्तः । उक्तं च प्रबोधचन्द्रोदये

'क्रुद्धे स्मेरमुखावधीरणमथाविष्टे प्रसादोदयो
व्याक्रोशे कुशलोक्तिरात्मदुरितच्छेदोत्सवस्ताडने ।
धिग्जन्तोरजितात्मनोऽस्य महती दैवादुपेता विपद्
दुर्वारेति दयारसार्द्रमनसः क्रोधस्य कुत्रोदयः ॥'

इति । क्षमावतः स्वभावोऽयमिति द्रष्टव्यम् ॥ ३३ ॥

सर्पैरदंशयदघातयदुग्रदन्तै-
र्दन्तावलैर्विषमपाययदिन्द्रशत्रुः ।
एनं भृगौ पुनरपातयदद्वितीय-
ब्रह्मैकतानहृदयो न चचाल बालः ॥ ३४ ॥

सर्पैरिति । इन्द्रशत्रुः हिरण्यकशिपुरेनं प्रह्लादं सर्पैरदंशयद्दंशितवान् । उग्रदन्तैस्तीक्ष्णरदनैर्दन्तावलैर्गजैरघातयद् घातितवान् । विषमपाययत् पायितवान् । पुनरेभिर्व्यापारैरप्यनुज्झितप्राणं भृगावपातयत् । भृगुपतनं नाम पर्वताग्रमारोप्याधः पतनम् । तदपि कारयामास । तस्मिन्नपि कृते बालो शिशुरपि ब्रह्मैकतानं ब्रह्मणि नितरां प्रवणं हृदयमस्येति तथाभूतः । एकतानोऽनन्यवृत्तिरित्यमरः । सर्वात्मना परमे ब्रह्मणि निलीनहृदय इत्यर्थः । हेतुगर्भं चेदं विशेषणम् । ब्रह्मणि निलीनहृदयत्वाद् न चचाल न चलितवान् । तदुक्तम् —

'परं परं ब्रह्म सुहाणभाविण
ण बाहिरं वाइलकीव देहिण' इति ॥ ३४ ॥

शक्नोति यन्न शतकोटिरपि प्रभेत्तुं
यत् कालतोऽपि नहि जीर्यति देशतो वा ।
तद्वर्म नर्मघटितं हरिभक्तिसंज्ञं
यं त्रायते स्म पृथुकस्य कुतोऽस्य भीतिः ॥ ३५ ॥

... ... ... ... ... प्रभेत्तुं प्रभङ्क्तुं न शक्नोति न प्रभवति । यद्वर्म कालतो देशतो वापि कालदेशाभ्यामपि नहि जीर्यति वयोहानिं न प्राप्नोति । तत् तादृशं नर्मणा आनन्देन घटितं युक्तं हरिभक्तिसंज्ञं विष्णुभक्तिनामकं वर्म कवचं यं त्रायते स्म रक्ष । अ (स्य ? न्य)वर्मणः शस्त्रभेद्यत्वमपि कदाचित्स्यादेव । अस्य तु विष्णुभक्तिनाम्नः कवचस्य वज्रेणाप्यभेद्यत्वमिति व्यतिरेकः । तादृशस्यास्य पृथुकस्यार्भकस्य । पृथुकौ चिपिटार्भकौ इत्यमरः । कुतः कस्माद्विषयाद् भीतिः । न कुतश्चिदपीत्यर्थः ॥ ३५ ॥

भूयोऽपि तं वरुणपाशनियन्त्रिताङ्गं
दैत्योऽभ्यशाययदसौ वसतिं गुरूणाम् ।
बन्धं विनारमत यस्य मनो मुकुन्दे
तस्यार्भकस्य तु कियानिह देहबन्धः ॥ ३६ ॥

भूय इति । असौ दैत्यो हिरण्यकशिपुः भूयोऽपि पुनरपि तं प्रह्लादं वरुणपाशेन नियन्त्रिताङ्गं दृढबद्धसर्वावयवं कृत्वा गुरूणां वसतिं शुक्रभवनमध्यशाययत् । तत्र क्षिप्तवानित्यर्थः । किमस्य बन्धनेन हीयत इत्याह । यस्यार्भकस्य मनो बन्धं विना सङ्गमन्तरेण अव्यवधानेनेत्यर्थः । मुकुन्दे विष्णौ अरमत रतिमधिगतम् । तस्य तादृशस्यार्भकस्य तु इह गुरुगृहे देहबन्धः शरीरमात्रनियमनं कियान् किंपरिमाणम् । असार इत्यर्थः । भगवति नीरोधं निलीनमस्य मन इदं बाह्यबन्धनं न जानातीति भावः ॥ ३६ ॥

तत्संस्तवादसुरबालकुलानि सर्वा-
ण्यात्मावबोधपरिपूतमनांस्यभूवन् ।
रूढानि किं न परितः सुरभिद्रुमस्य
प्राप्तस्तृणान्यपि भवन्ति सुगन्धवन्ति ॥ ३७ ॥

तद् इति । तस्य अर्भकस्य संस्तवात् संपर्कात् परिचयाद्धेतोः सर्वाणि निश्शेषाण्यसुरबालानां कुलानि वृन्दान्यात्मावबोधेनात्मज्ञानेन हेतुना परिपूत-मनांसि विष्णुभक्तिविशोधितचित्तान्यभूवन् । अत्र दृष्टान्तमाह—सुरभिद्रुमस्य चन्दनचम्पकादिसुगन्धिवृक्षस्य परितः समन्ततो रूढान्यङ्कुरितानि तृणान्यपिप्रायः सुगन्धवन्ति सुरभिगन्धशालीनि किं न भवन्ति । तथा भवन्त्येवेत्यर्थः ॥ ३७ ॥

नारायणाच्युत हरे मधुसूदनेति
प्रोच्चार्यमाणरमणीयमुकुन्दनाम्नाम् ।
उद्दामभक्तिरसनिर्भरमर्भकाणां
वृन्दं मुहुर्मुनिगृहान् मुखरीचकार ॥ ३८ ॥

नारायणेति । नारायणेत्यादीनि प्रोच्चार्यमाणानि प्रकर्षेणोच्चैरुदीर्य-माणानि रमणीयानि भक्तजनमनोहराणि मुकुन्दनामानि विष्णोः सहस्राधिकानि नामानि यैस्तादृशानामर्भकाणामसुरबालानामुद्दामेनोत्कृष्टेन भक्तिरसेन भगवद्भावनात्मना सुखेन निर्भरं संपूर्णं वृन्दं समूहः मुनिगृहान् शुक्रनिकेतनं मुहुः पुनः पुनः मुखरीचकार सशब्दघोषमकरोत् ॥ ३८ ॥

श्रुत्वा हिरण्यकशिपुः श्रुतिदुःसहं त-
च्चिन्तामधादहह विष्णुपरत्वमेतत् ।
एकत्र लग्नमपि दैत्यकुलं समस्तं
व्याप्नोत्यलर्कविषवत् सकलं शरीरम् ॥ ३९ ॥

श्रुत्वेति । हिरण्यकशिपुः श्रुतिदुःसहं कर्णयोरसहमरुन्तुदप्रायं तद्विष्णु-नामोच्चारणं श्रुत्वा चिन्तामधादचिन्तयत् । अहहेत्यमर्षद्योतकम् । एतदत्र प्रवर्तमानं विष्णुपरत्वं विष्णुभक्तिरेकत्र लग्नमपि प्रह्लादमात्रे प्रथममुद्भूतमपि समस्तं निश्शेषं दैत्यकुलमसुरार्भकसङ्घं व्याप्नोति । ... ... ... तद्वदिदमपीत्यर्थः ॥ ३९ ॥

नानास्त्रशस्त्रनिहतोऽपि विहीयतेऽसौ
नो वज्रलेपघटितैरिव जीवबन्धैः ।
आश्लिष्यते प्रतिमुहुर्बहु विष्णुभक्त्या
बालोऽपि हन्त विटपी विषवीरुधेव ॥ ४० ॥

नानेति । असौ प्रह्लादो नानाविधैरस्त्रशस्त्रैर्निहतः प्रहृतः सन्नपि जीव-बन्धैर्न विहीयते प्राणैर्न विमुच्यते । अतो वज्रलेपघटितैरिव अष्टबन्धयोगद्रव्य,

दृढीकृतैरिव प्रतिमुहुः पुनःपुनरपि विष्णुभक्त्या बालोऽप्यसौ बह्वाश्लिष्यते दृढमुपगूह्यते। हन्त कष्टमिदम् विषवीरुधा विषवल्ल्या बालविटपीव। तया समाश्लिष्टो विटपी तत्क्षणं शुष्यत्येव। तद्वद् विष्णुग्रहग्रस्तेनानेनास्माकं न किञ्चिदपि प्रयोजनमस्तीति भावः॥ ४०॥

पप्रच्छ चैनमुपसृत्य स दैत्यराजो
रे मूढ कस्तव तथापटुराश्रयोऽभूत्।
यद्गौरवादहितखण्डनपण्डितान-
प्यस्मानहो भण तृणाय न मन्यसे त्वम्॥ ४१॥

पप्रच्छेति। स दैत्यराजो हिरण्यकशिपुरेनं प्रह्लादमुपसृत्य उपगम्य पप्रच्छ पृष्टवांश्च। किमिति—रे मूढ दुर्बुद्धे! तथापटुस्तादृक्समर्थः कस्तवाश्रयोऽभूदवलम्बनं जातः। यद्गौरवाद् यस्य गुरुत्वाद्धेतोरस्मानपि तृणाय न मन्यसे। त्वं तृणमपि (न) कल्पयसे। कीदृशान्— अहितखण्डने शत्रुविदलने पण्डितान् समर्थान्। अहो आश्चर्यमिदम्। भण शत्रुप्रमथनचतुरेभ्योऽस्मदपि बलीयांसं कतममवष्टभ्यास्मान्न बहुमन्यस इत्येतद् ब्रूहीत्येवं पप्रच्छेति सम्बन्धः॥ ४१॥

अस्त्याश्रयः स तु ममैव न केवलस्य
लोकत्रयस्य स गतिः स गतिस्तवापि।
व्याप्तिक्रियावचनविष्णुपदाभिधेयः
सोऽयं हरिः शरणमित्ययमप्यवादीत्॥ ४२॥

अस्तीति। अयं प्रह्लादोऽप्यवादीद् उक्तवान्। किमिति — आश्रयोऽस्ति। तथापटुरवलम्बभूतः कश्चिदस्ति। अस्तीति सत्पदवाच्यः स एव। स तु केवलस्य ममैव नाश्रयः। कस्य तर्हि। लोकत्रयस्य त्रैलोक्यवासिनो जनस्य स गतिः स एवाधारः। तवापि स एव गतिः शरणं नान्यः। स क इति चेदाह — व्याप्तिक्रियावचनेन विष्णुपदेनाभिधेयः अभिधातुं शक्यः। अथवा 'विष्लृ व्याप्तावि'ति धातोरभिधेयोऽर्थः स एव। तदुक्तम् "विश्वव्याप्तित्वहेतोर्जगति सुमतिभिर्विष्णुरित्युच्यते यः" इति। सोऽयं तादृक्प्रभावो हरिः दुरितानि हरतीति हरिपदाभिधेयोऽस्ति मम शरणं रक्षिता येन तव दुर्व्यवसायान्न बिभेमीति भावः॥ ४२॥

यद्येवमद्य तव विष्णुरशेषवस्तु-
व्यापी निवारयतु शस्त्रमिदं मदीयम् ।
इत्थं सहासमभिधाय सरोषदम्भः
स्तम्भे हिरण्यकशिपुः प्रजिघाय शस्त्रम् ॥ ४३ ॥

यदीति । एवं यदि व्याप्तिक्रियावचन इति यथा त्वयोक्तं स तथा चेत् तर्ह्यद्य अशेषवस्तुषु व्यापी व्यापनशीलस्तव विष्णुर्मदीयमिदं शस्त्रं खड्गं निवारयतु रुणद्धु वपुषि निपतनान्निरस्यतु । सरोषदम्भः रोषेण दम्भेन च सहितः । 'दम्भस्त्वनृतवाग्वृत्त्या पौरुष(ख्यानं ? ख्यापनं)निजम्' इति हि तल्लक्षणम् । हिरण्यकशिपुरित्थं सहासम् उच्चैः प्रहसन्नभिधायोक्त्वा स्तम्भे सभामण्डपस्थूणायां शस्त्रं प्रजिघाय प्रयुक्तवान् । शस्त्रेण स्तम्भे प्रहृतवानित्यर्थः ॥ ४३ ॥

पर्जन्यजन्यकटुगर्जिततर्जनोर्जः-
स्फूर्जत्तरस्फुटनिरुद्धकुलाद्रिरन्ध्रः ।
दिक्कुम्भिकर्णकुहरत्रुटनप्रवीणः
स्थूणोदरादजनि कोऽपि तदा निनादः ॥ ४४ ॥

पर्जन्येति । तदा तत्प्रहरणसमये स्थूणोदरात् स्तम्भस्यान्तर्भागात् कोऽपि ईदृगिति वक्तुमशक्यो निनादः शब्दोऽजनि जातः । पर्जन्यात् प्रलयघनाद् जन्यस्य जातस्य 'भव्यगेय' इत्यादिना कर्तरि कृत्यः । कटोः क्रूरस्य गर्जितस्य स्तनितस्य तर्जनेन भर्त्सनेनोर्जसा बलेन । स्वनमहिम्नेत्यर्थः । स्फूर्जत्तरः अतिशयेन प्रवृद्धः । किंच स्फुटं यथा भवति तथा निरुद्धानि कुलाद्रीणां रन्ध्राणि येन तादृशः । किंच दिक्कुम्भिनामाशान्तदन्तिनां कर्णकुहराणां त्रुटने भञ्जने प्रवीणः समर्थः । एवं यत्किञ्चिदव्यक्तमेवेति भावः ॥ ४४ ॥

यच्छ्राविणो दितिसुताः कतिचिन्मुमूर्च्छुः
केचिन्निपेतुरवनौ लुलुठुस्तथान्ये ।
एके विलेपुरपरे रुरुदुः परे तु
क्षिप्रं प्रदुद्रुवुरमूनितरे निराधुः ॥ ४५ ॥

यद् इति । यच्छ्राविणो यस्य निनादस्य श्रोतारः कतिचिद्दितिसुता दैत्या मुमुर्च्छुर्मोहमुपगताः । केचिदवनौ निपेतुः पतितवन्तः । तथान्ये

लुलुठुः अवनावेव लुठनं चक्रुः । एके विलेपुः परिदेवनं चक्रुः । अपरे रुरुदुः क्रन्दितवन्तः । परे तु क्षिप्रमाशु प्रदुद्रुवुः तस्मात् प्रदेशात् पलायितवन्तः । इतरे असून् प्राणान् निरासुस्त्यक्तवन्तः । निष्पूर्वो ऽस्यतेर्लिट् ॥ ४५ ॥

> सम्भ्रान्तचक्षुरथ दिक्षु विदिक्षु च द्रा-
> गीक्षाम्बभूव स यदा चकितोऽसुरेन्द्रः ।
> स्तम्भादलक्ष्यत तदा बहिरुग्रदंष्ट्रा-
> कोटिः सटावलिजटालमुखो नृसिंहः ॥ ४६ ॥

सम्भ्रान्तेति । अथ निनादश्रवणादनन्तरं सोऽसुरेन्द्रो हिरण्यकशिपुः यदा यस्मिन् काले येन चकितो भीतः सम्भ्रान्तचक्षुरनवास्थितनेत्रवृत्तिः दिक्षु विदिक्षु च द्राक् क्षिप्रं ईक्षाम्बभूव । कुत एष शब्दः प्रवर्तत इति सर्वत्र चक्षुर्व्यापारं कृतवान् । तदा तस्मिन् काले नृसिंहः नरसिंहरूपो भगवान् महाविष्णुः स्तम्भाद् बहिरलक्ष्यत । सर्वजनैरिति शेषः ॥ ४६ ॥

अथ त्रिभिः श्लोकैरस्य विग्रहं विशिनष्टि —

> तप्तारकूटकपिशाक्षिपुटस्फुटोद्य-
> ज्ज्योतिश्छटारुणपटापिहितान्तरिक्षम् ।
> उत्तालतालपृथुदीर्घभुजासहस्र-
> प्रान्तस्फुरन्नखशिखालिखिताम्बुवाहम् ॥ ४७ ॥

तप्तेति । तप्तमनलाध्मातम् आरकूटं ताम्रलोहं तद्वत् कपिशयोस्ताम्रयोरक्षिपुटयोर्नेत्रान्तर्भागयोः स्फुटं यथा तथोद्यतामुद्गच्छतां ज्योतिषां छटा समूहः तद्रूपेणारुणपटेन कुसुम्भादिरक्तवस्त्रेणापिहितमाच्छादितमन्तरिक्षमाकाशो यस्य । उत्तालानामुन्नतानां तालद्रुमाणामिव पृथुदीर्घाणां स्थूलायतानां भुजानां सहस्रस्य प्रान्तेष्वग्रेषु स्फुरन्तीभिर्नखशिखाभिर्नखरशिखरैः लिखिता लीढा अम्बुवाहा मेघा यस्य ॥ ४७ ॥

> जृम्भाविदीर्णमुखगह्वरलम्बमान-
> जिह्वामहाभुजगवल्गितदुर्निरीक्षम् ।
> प्रालेयपाण्डुरुचिभासुरकेसराली-
> केलीविधूननविसंस्थुलमांसलांसम् ॥ ४८ ॥

जृम्भेति । संबाहूत्क्षेपं यो गात्रविनामः सा जृम्भा नाम । जभि जृभी गात्रविनाम इति धातुः । तया सह विदीर्णे व्याप्ते मुखगह्वरे लम्ब- मानस्याधस्तात् प्रवर्तमानस्य जिह्वारूपस्य महाभुजगस्य वल्गितेन भ्रमणेन दुर्निरीक्षं (भीतिं कृत्वा ?) दुरालोकम् । प्रालेयपाण्डुवा हिमशुभ्रया रुच्या भासुरायाः केसराल्या मुखलोमपङ्क्तेः केलीविधूननेन विसंस्थुलौ दन्तुरौ मांसलौ पृथू अंसौ स्कन्धभागौ यस्य ॥ ४८ ॥

स्थूलह्रसिष्ठतरकण्ठमकुण्ठनाद-
विद्रावितादिवनसञ्चरसत्त्वजालम् ।
तत्तादृशं कमपि विग्रहमुग्रमुच्चै-
रग्रे हिरण्यकशिपुः सभयं ददर्श ॥ ४९ ॥

स्थूलेति । स्थूलः पृथुः ह्रसिष्ठतरोऽतिशयेन ह्रस्वश्च कण्ठो यस्य । अकुण्ठैरत्युच्चैः नादैः कण्ठरवैः विद्रावितं भयपलायितमद्रिवनसंचरं सञ्चारस्थानं यस्य तथाभूतं सत्त्वजालं सिंहव्याघ्रादिवनजन्तुसमूहो येन । तत्तादृशं तथाभूतं कमप्यनिर्देश्यम् उग्रं भयानकं विग्रहं भगवतो नरसिंहशरीरं हिरण्यक- शिपुरग्रे पुरोभागे सभयं सत्रासं ददर्श दृष्टवान् ॥ ४९ ॥

हंहो! स एष खलु विष्णुरधृष्णुरस्म-
त्त्रस्यन्नदर्शनमगादियतोऽपि कालान् ।
योऽसौ स संप्रति समक्षमुपैति दिष्ट्ये-
त्यभ्यापतद् भ्रमितचण्डगदः स दैत्यः ॥ ५० ॥

हंहो इति । हंहो आश्चर्यमिदम् । स खलु स एव विष्णुरेषः । योऽस्मदस्माकं सकाशात् त्रस्यन् भीतः सन्नधृष्णुरप्रगल्भ इयत एतावतः कालानप्यदर्शनमगात् क्वापि निलीनवान् । स तादृशोऽसौ संप्रतीदानीं दिष्ट्या दैवगत्या समक्षमुपैत्यस्मत्प्रत्यक्षतां प्राप्नोति । अस्यासन्नविनाशावसरत्वा- द्दैवेनैव दर्शित इति भावः । इत्येवं जल्पन् दैत्यः स हिरण्यकशिपुः भ्रमिता कराञ्चले व्यावल्गिता चण्डा क्रूरा गदा येन । तथा सन्नभ्यापतत् भगव- तोऽभिमुखमागतवान् ॥ ५० ॥

दोर्यन्त्रमध्यपतितोऽपि हरेस्ततः स
प्रभ्रश्य तत्क्षणगृहीतमहासिचर्मा ।
वल्गन्नफल्गुपटिमा विविधप्रकारं
भूयोऽप्यभीरभिससार तथोग्रमेनम् ॥ ५१ ॥

दोरिति । स दैत्यो हरेर्नृसिंहस्य दोर्यन्त्रमध्ये पतितः सन्नपि ततो दोर्यन्त्रमध्यात् प्रभ्रश्य प्रभ्रष्टो भूत्वा । बलादाकृष्टस्वशरीरः सन्नित्यर्थः । तत्क्षणमेव तदानीमेव गृहीतमहासिचर्मा करधृतखड्गफलकः । विविधप्रकारं नानाप्रकारं वल्गन् पतनोत्पतनमण्डलभ्रमणादिशरीरव्यायामविचेष्टितानि प्रदर्शयन् । अफल्गुपटिमा गुरुतरसङ्ग्रामसमर्थ इत्यर्थः । भूयोऽपि पुनरपि । अभीर्निर्भयः सन् तथोग्रं तत्ताहग्भयङ्करमप्येनं नृसिंहम् अभिससाराभिमुख्येनोपसृतवान् ॥ ५१ ॥

अग्रेऽभिपत्य कृतविग्रहमुग्रशस्त्र-
व्यग्राग्रहस्तमतिदुर्ग्रहमग्रहीत्तम् ।
द्वारस्थितो नृहरिराशु निजोरुभागे
घोरप्रहारशतविक्षतमक्षिपच्च ॥ ५२ ॥

अग्रे इति । नृहरिर्नरसिंहोऽग्रेऽभिपत्य स्वपुरोभागे समभिगम्य उग्रेण शस्त्रेण खड्गेन व्यग्रः समसितोऽग्रहस्तो हस्ताग्रं यस्य । तथा कृतविग्रहं विहितयुद्धम् अतिदुर्ग्रहं ग्रहीतुमत्यन्तमशक्यमपि तं दैत्यम् अग्रहीत् गृहीतवान् । द्वारस्थितः गृहस्यान्तर्बहिश्चायं न निग्राह्य इत्यादिवरलाभममोघयितुमिदम् । घोरेण प्रहारशतेन विक्षतं विच्छिन्नसकलावयवमेनं निजे ऊरुभागेऽक्षिपच्च क्षिप्तवांश्च । भूम्यन्तरिक्षयोरप्यवध्यत्ववरपरिजिहीर्षयेदमपि ॥ ५२ ॥

वक्षः शिलाकठिनमस्य दृढास्थिकूट-
स्फोटोच्चलच्चटचटारवभैरवं तत् ।
वज्रादपि स्थिरखरैर्नखरैर्व्यदारी-
दुद्वत्वरक्षतजपिच्छिलमुच्चकैः सः ॥ ५३ ॥

वक्षः इति । स नृहरिरस्य ऊरौ क्षिप्तस्य हिरण्यकशिपोः । तत् तथा वक्ष्यमाणविशेषणविशिष्टं वक्ष उरःस्थलम् । वज्रादपि स्थिरैः कठिनैः खरैस्तीक्ष्णैर्नखरैः व्यदारीद् द्विधा विदारितवान् । कीदृशं वक्षः । शिलाकठिनं पाषाणवत् कर्कशम् । दृढस्य स्थिरतरस्यास्थिकूटस्यास्थिसङ्घातस्य

स्फोटात् त्रुटनादुच्चकैरोद्गच्छता चटचटारवेण भैरवं शृण्वतां भयङ्करम् । उच्चकै-रूर्ध्वम् उद्गत्वरेणोत्पतनशीलेन क्षतजेन पिच्छिलमार्द्रीभूतम् ॥ ५३ ॥

मस्तिष्कपङ्कबहलाद्दलितास्थिनाला-
दुद्धातचित्तकमलादसुराधिपस्य ।
आदाय स क्षतजतोयमुरस्तटाका-
दुच्चण्डगर्जितमपान्मुहुरिद्धकोपः ॥ ५४ ॥

**मस्तिष्केति** । स नृहरिरिद्धकोपः प्रवृद्धामर्षः सन् असुराधिपस्योर-स्तटाकादुरस एव तटाकात् क्षतजं रुधिररूपं तोयमादाय कराञ्जलिपुटे गृहीत्वा उच्चण्डगर्जितं क्रूरतरसिंहनादं यथा भवति तथा मुहुः अनेकवारं अपान् पीतवान् । इद्धकोपाग्निनिर्वापणायेदं तोयपानम् । उरसस्तटाकत्वेन रूपणात् तदनुगुणानि विशेषणान्याह । मस्तिष्कं वसा - द्रूपेण पङ्केन कर्दमेन बहलात् सान्द्रात् । दलितास्थिनालात् अस्थिरूपबिसकाण्डात् । उद्धातमुद्धृतं चित्तमेव कमलं यस्मात्तादृग्भूतादुरस्तटाकादिति सम्बन्धः ॥ ५४ ॥

अङ्गानि चन्द्रकरशुभ्रतनूरुहाण्य-
प्यस्रच्छटाच्छुरणकर्बुरकान्तिभाञ्जि ।
सन्ध्यातपारुणिमशारितशारदाभ्र-
विभ्रान्तिकृन्ति विभुराबिभराम्बभूव ॥ ५५ ॥

**अङ्गानीति** । विभुर्भगवान् नृसिंहः अङ्गानि स्वशरीरावयवान् चन्द्रकरा इव शुभ्रा(णि) धवला(रत?नि त)नूरुहाणि रोमाणि येषां तथाभूतानि अपि अस्रच्छटायाः रुधिरप्रवाहस्य छुरणेन सम्पर्केण हेतुना कर्बुरकान्तिभाञ्जि सिति-मारुणिमशबलितां कान्तिं वहन्ति सन्ति । सन्ध्यातपस्यारुणिम्ना शोणिम्ना शारितानां शबलितानां शारदानां शरत्समयसम्भूतानां अभ्राणां वारिवाहानां सम्बन्धिनीं विभ्रान्तिं भ्रमं कुर्वन्तीति तथाभूतानि । सन्ध्यारागानुलिप्तशारद-वारिदाः किममूनीति सन्देहकारीणीत्यर्थः । तादृशान्यङ्गानि आबिभरांबभूव आभरणस्थानितया धारयामास ॥ ५५ ॥

उत्तालमांसलतमांसगलावसक्त-
रक्तस्रुदान्त्रगुणभूषणभूषिताङ्गः ।
अक्षान्तरोपमतिपाटलमक्षियुग्मं
चिक्षेप दिक्षु स दिधक्षुरिव त्रिलोकीम् ॥ ५६ ॥

उत्तालेति । स नृहरिस्त्रिलोकीं दिधक्षुरिव दग्धुमिच्छुरिव अक्षान्तरोष-मप्रशान्तकोपं यथा भवति तथा अतिपाटलमत्यन्तारुणमक्षियुग्मं दिक्षु सर्वाशासु चिक्षेप प्रेरितवान् । कीदृशः स विभुः । उत्तालयोरुन्नतयोर्मांसलत-मयोरतिशयेन पृथ्वोरंसयोः स्कन्धयोर्गले कण्ठे चावसक्तैराबद्धैः रक्तस्रुद्भिः शोणितमुद्वमद्भिरान्त्रगणैरान्त्रमालाभिरेव भूषणैरलङ्कारसाधनैर्भूषितान्यलङ्कृता-न्यङ्गानि यस्य तादृश इति । किमतः परं भयानकस्थानमिति भावः ॥ ५६ ॥

हित्वा हिरण्यकशिपोर्व्यसु तच्छरीरं
प्रोत्थाय दैत्यपटलं निखिलं चखाद ।
इत्थं भयानकतनुर्दनुजारिसिंहः
संहाररुद्रमपि स द्रुतमत्यशेत ॥ ५७ ॥

हित्वेति । दनुजारिसिंहो नरसिंहमूर्त्तिर्भगवान् महाविष्णुर्हिरण्य-कशिपोः तद् व्यसु विगतप्राणं शरीरं हित्वा परित्यज्य प्रोत्थाय निखिलं निश्शेषं दैत्यपटलं दानवसमूहं चखाद भक्षितवान् । इत्थमुक्तप्रकारेण भयान-कतनुर्भयङ्करशरीरः संहाररुद्रं कालरुद्रमूर्त्तिं भगवन्तं श्रीपरमेश्वरमपि द्रुतं क्षिप्रं अत्यशेत स नृसिंहमूर्त्तिरित्यर्थः ॥ ५७ ॥

तत्तादृशं तमभिसर्तुमपारयद्भिः
सञ्चोदितः शतधृतिप्रमुखैरमर्त्यैः ।
भक्तोत्तमः स खलु निर्भयमर्भकोऽपि
प्रह्लाद एत्य हरिमस्तुत वस्तुतोऽमुम् ॥ ५८ ॥

तद् इति । शतधृतिप्रमुखैर्ब्रह्मादिभिरमर्त्यैस्तत्तादृशं तथा भीषणस्वरूपं नृसिंहमभिसर्तुमाभिमुख्येनोपेतुमपारयद्भिरसमर्थैः सद्भिः सञ्चोदितो नियु-क्तोऽर्भकोऽपि अत्यन्तशिशुरपि भक्तोत्तमो विष्णुभक्तेष्वग्रगण्यः स खलु प्रह्लादो निर्भयं भयरहितं यथा तथा एत्य प्राप्य । भक्तोत्तमत्वमत्र भयराहित्यहेतुः । हरिममुं नृसिंहं वस्तुतस्तत्त्वतोऽस्तुत स्तुतवान् ॥ ५८ ॥

जागर्ति जाग्रति जगज्जगदीश यस्मिन्
यस्मिन् पुनः स्वपिति तत् स्वपिति त्रिधामन् ।
द्वैतभ्रमस्य विषयः स कथं भवान् स्या-
त्तस्मै नमोऽस्तु भगवन् परमात्मने ते ॥ ५९ ॥

जागर्तीति । हे त्रिधामन् ! ब्रह्मविष्णुशिवात्माधमत्रयमवलेख्यमान् हे जगदीश! यस्मिन् भवति जाग्रति योगनिद्रामपनीय स्थिते सति जगत् त्रिभुवन मिदं जागर्ति चैतन्ययुक्तं भवति । यस्मिन् पुनः स्वपति निद्रायमाणे सति तज्जगत् स्वपिति निश्चेष्टं भवति । भवतो निद्राकाल एव प्रलयकाल इति भावः । तत्तादृशो भवान् द्वैतभ्रमस्य जीवात्मपरमात्मत्वेन द्विधा द्वैतं तद्रूपस्य भ्रमस्य । परमात्मनः पृथगमूनि जीवस्वरूपाणीति भ्रान्तेर्विषयः कथं स्यात् । अद्वैतसदानन्दब्रह्मैव भवानित्यर्थः । हे भगवंस्तस्मै तादृङ्महिम्ने परमात्मने ते नमोऽस्तु । सर्वात्मना प्रह्वो भवामि ॥ ५९ ॥

प्रमोहार्णवे मज्जनं यज्जनानां
भ्रमाधायिमायासमायातमेतत् ।
शमं याति तद्यस्य तत्त्वावबोधा-
न्नमस्ते हरे नारसिंहाय तस्मै ॥ ६० ॥

प्रमोहेति । प्रमोहार्णवे संसारसागरे जनानां यन्मज्जनमवगाहनं तद् भ्रमाधायिन्या भ्रममुपपादयन्त्या मायायाः सकाशात्समायातं सम्प्राप्तम् । एतद् यस्य ब्रह्मस्वरूपस्य भगवतस्तत्त्वावबोधे परमार्थज्ञाने सति तन्मोहार्णवनिमज्जनं शमं याति प्रशाम्यति । तदुक्तम् —

'शुक्तौ रूप्यमिव स्रजीव भुजगः स्वात्मावबोधे हरा-
वज्ञाते प्रभवत्यथास्तमयते तत्त्वप्रबोधोदयात् ।'

इति । हे हरे नारसिंहाय नरसिंहरूपिणे तस्मै तथाभूतप्रभावाय ते नमोऽस्तु ॥ ६० ॥

अमूर्त्तिः स्वतो यद्यपि त्वं तथापि
प्रपन्नार्त्तिविध्वंसनायात्तमूर्त्तिः ।
जले चन्द्रवद्भ्रान्तये कल्पसे यो
नमस्ते हरे नारसिंहाय तस्मै ॥ ६१ ॥

अमूर्तिरिति । यस्त्वं स्वतः स्वभावेनामूर्तिर्मूर्त्तिरहितो निष्कलब्रह्मात्मा यद्यपि तथापि प्रपन्नानां शरणं प्राप्तानां जनानामार्त्तिविध्वंसनाय संसारदुःख-प्रशमनार्थमात्तमूर्तिर्गृहीतशरीरः सकलविग्रहः । भगवतः सर्वाङ्गसौन्दर्यविभावनं हि जनानां भक्तिहेतुः । भक्तिस्तु मुक्तिहेतुरिति भक्तानुग्रहार्थं विग्रहस्वीकारः ।

तथा सन् भ्रान्तये विष्णुः, शिवो, ब्रह्मा, शाक्ता, षण्मुख इत्याद्यनेकस्वरूपभ्रमाय कल्पसे समर्थो भवसि। जले चन्द्रवत्। कूपतटाककासारसरिदादिसर्वसलिलेषु पृथक् पृथक् प्रतिबिम्बितत्वादेकोऽप्यनेक इव प्रतिभाति चन्द्रः। तद्वत्तव मूर्त्तिरपीत्यर्थः ॥ ६१ ॥

तिले तैलवद्वस्तुषु व्याप्तमेकं
गुणैरप्यनालीढमानन्दसान्द्रम्।
महत्तन्महो यस्य विश्वस्य कर्त्रे
नमस्ते हरे नारसिंहाय तस्मै ॥ ६२ ॥

तिले इति। यस्य तद्वत् तथा प्रसिद्धं महत् प्रभूतं महस्तेज आनन्दसान्द्रं परमानन्दरूपं सच्चिदात्मकमेकमद्वितीयं वस्तुषु नरतिर्यक्स्थावरादिषु तिले तैलं यथा तथा सर्वत्र व्याप्तं गुणैः सत्त्वरजस्तमोभिरप्यनालीढमस्पृष्टम् तादृशं महो जयतीति शेषः। तस्मै ते विश्वस्य कर्त्रे चराचरप्रपञ्चस्य प्रकटयित्रे नमः ॥ ६२ ॥

श्रुतिः पूर्वतो भावनं तत्परस्तात्
ततश्चोपरिष्टान्निदिध्यासनं च।
प्रयत्नत्रयेणामुना यत्प्रबोधो
नमस्ते हरे नारसिंहाय तस्मै ॥ ६३ ॥

श्रुतिरिति। श्रुतिर्वृद्धमुखेभ्यः श्रवणं पूर्वतः प्रथमम्। तत्परस्तादुपरि भावनं श्रुतस्यार्थस्यात्मनि दृढीकरणम्। ततश्चोपरिष्टाद् भावनानन्तरं निदिध्यासनं तत्त्वदर्शनमेव। अमुना श्रवणमनननिदिध्यासरूपेण प्रयत्नत्रयेण यत्प्रबोधो यस्य भवतस्तत्त्वज्ञानम्। भवतीति शेषः। तदुक्तम् —

'वृद्धेभ्यस्तावदाकर्णनमथ च पुनर्भावनं सावधानं
भावापत्तौ निदिध्यासनमिति मुनयो यत्कृते यत्नमाहुः।'

इति। तस्मै ते नमः ॥ ६३ ॥

परं निष्क्रियं निष्कलं निष्कलङ्कं
परिज्ञेयमेकेन भक्तिग्रहेण।
सदाभास्वरं ब्रह्म यश्चिन्मयं त-
न्नमस्ते हरे नारसिंहाय तस्मै ॥ ६४ ॥

परम् इति । सदाभास्वरं सर्वकालेषु भासनशीलं चिन्मयं ज्ञानस्वरूपं परं प्रकृतेः परस्ताद्वर्तमानं यन्निर्व्यापारं निष्कलङ्कं निर्दोषं भक्तिग्रहेण भक्तिस्वीकारेण एव केवलेन परिज्ञेयं ज्ञातुं शक्यं न तु शास्त्रादिग्रहेण । शास्त्रस्य तु साङ्ख्याद्यनेकमतप्रपञ्चभिन्नभिन्नत्वाद् दुरवबोधत्वम् । प्रेमात्मिकाया भक्तेस्तु परमेकस्या एव भगवत्तत्त्वविज्ञानं सिद्ध्यतीत्यर्थः । तत् तादृशं ब्रह्म यः यस्त्वमेव । तस्मै ते नरसिंहरूपाय नमः ॥ ६४ ॥

उपसंहरति —

> एवंप्रायस्तवपदनवस्रग्भिरभ्यर्चयन्तं
> प्रह्लादं तं प्रमुदितमनाः शान्तरोषोऽनुगृह्णन् ।
> यः कारुण्यादभयमददल्लोकनाथस्त्रिलोक्यै
> सोऽयं विष्णुः प्रशमयतु वो नारकं नारसिंहः ॥ ६५ ॥

एवमिति । यो विष्णुरेवंप्रायाभिः स्तवपदनवस्रग्भिः स्तुत्यक्षरनूतनमाल्यैरभ्यर्चयन्तमाभिमुख्येन स्थित्वा पूजयन्तं प्रह्लादं प्रमुदितमनाः प्रहृष्टधीः शान्तरोषः प्रशमितकोपः सन्ननुगृह्णन् अनुग्रहं प्रदिशन् कारुण्याद्धेतोस्त्रिलोक्यै लोकत्रयवासिभ्यो जनेभ्यः अभयमददत् । लोकत्रयकण्टकं हिरण्यकशिपुं हत्वा भीत्यभावं दत्तवान् । सोऽयं तथाभूतप्रभावो लोकनाथो लोकानामीश्वरो निजाभिमतवस्तुयाच्ञाविषय आशिषः प्रयोक्ता विष्णुर्विश्वव्यापी भगवान्नारसिंहो नरसिंहमूर्त्तिर्वो युष्माकं नारकं दुरितं प्रशमयतु । नरकमेव नारकम् । 'स्यान्नारकस्तु नरकः' इत्यमरः । प्रार्थनायां लोट् । तादृग्भूतप्रभावो भगवान् नारायणो भवतामघप्रशमनपूर्वकमानन्दरूपं मङ्गलं सम्पादयतु इति सिद्धम् ॥ ६५ ॥

इति विष्णुविलासव्याख्यायां
चतुर्थः सर्गः ।

## पञ्चमः सर्गः ।

---

अथ वामनावतारं प्रस्तौति —

अथ महाबलिना बलिना रणे
निजसुतेषु जितेषु सुपर्वसु ।
अदितिरेत्य कदाचन काश्यपं
प्ररुदती वदति स्म पतिं सती ॥ १ ॥

**अथेति** । भगवतो नरसिंहावतारादुपरि काले निजसुतेष्वात्मीयापत्येषु सुपर्वसु पुरन्दरादिदेवेषु बलिना बलवता महाबलिना रणे देवासुरसमरे जितेषु पराभूतेषु सत्सु अदितिः कदाचन कस्मिंश्चित्समये पतिं भर्तारं काश्यपमेत्य प्राप्य प्ररुदती सती वदति स्म उक्तवती ॥ १ ॥

अविनयैरिव शास्त्रपरिश्रमा
मधुमदैरिव वा सहजा गुणाः ।
मम सुता भगवन् मघवन्मुखा
दितिसुतैः स्वपदादपवाहिताः ॥ २ ॥

**अविनयैरिति** । हे भगवन् ! मघवन्मुखा इन्द्रादयो मम सुता दितिसुतैः बलिप्रमुखैरसुरैः स्वपदादात्मीयस्थानात् स्वर्गादपवाहिता निराकृताः । किमिव । अविनयैः प्रशमाभावैः शास्त्रपरिश्रमा इव व्याकरणतर्कवेदान्तादिशास्त्रेषु परिचया अभ्यासा इव । अविनयो हि विद्यां विफलीकरोति । मधुमदैर्मद्यपानजनितैर्मदैः सहजा गुणा इव वा । मधुमदो हि स्वभावं विपर्यस्यति ॥ २ ॥

अहमिदं प्रवदामि न केवलं
ममतया मतया महतामपि ।
इह न कस्य शुचे गुणशालिनां
परिभवोऽरिभवोऽयमहेतुकः ॥ ३ ॥

**अहमिति** । महतां महाजनानामपि मतयाभिप्रेतया ममतया ममत्वेन पुत्रा इति स्नेहेन हेतुना केवलमहमिदं न प्रवदामि । किं तर्हि । इह अस्मिन् लोके अहेतुको निष्कारणोऽरिभवः शत्रोः सकाशादुद्भूतः गुणशालिनां गुण-

वतां जनानां परिभवः पराजयः कस्य जनस्य शुचे दुःखाय न भवति । सर्व-
स्यापि दुःखमुत्पादयेदित्यर्थः ॥ ३ ॥

वसुभिरेष वृषण्वसुभिर्वृषा
विरहितोऽपि तथा न दुनोति मां
निभृतहासनिकुञ्चितलोचनं
प्रमदशोभि यथा वदनं दितेः ॥ ४ ॥

वसुभिरिति । एष वृषा शक्रो वृषण्वसुभिर्वसुभिः । 'वृषण्वसु धना-
येन्द्रम्' इत्यमरः । विरहितोऽपि वियुक्तोऽपि तथा तादृक्प्रकारं मां न दुनोति
न दुःखयति । यथा यादृक्प्रकारं दितेर्मम सपत्न्या वदनं मां दुनोति । कीदृ-
शम् । निभृतेन निगूहितेन हासेन परिहासस्मितेन निकुञ्चिते सङ्कोचिते
लोचने यस्य । प्रमदो हर्षस्तेन शोभितुं शीलमस्येति । तथा न पीडयति । न(ष्ट)
सर्वस्वेऽपि मम पुत्र इत्यर्थः ॥ ४ ॥

नञिवयुक्तनयेन नयेत मा-
मदितिमत्र भवान् दितितुल्यताम् ।
यदिह निम्नतले विनिपेतुषां
समतलाधिगमोऽपि समुन्नतिः ॥ ५ ॥

नञिवेति । अत्र भवानदितिं मां दितितुल्यतां दित्या सदृशत्वं नयेत
प्रापयतु । तत् कथमिति चेदुच्यते । नञिवयुक्तनयेन । तत्सादृश्यं तदन्यत्वमि-
त्यादिना नञः षडर्थाः सन्ति । तेषां मध्ये तत्सादृश्यं योऽर्थो नञस्तस्यार्थस्य
स्वीकारो नञिवयुक्तन्यायः । अब्राह्मण इत्युक्ते ब्राह्मणसदृश इत्यर्थः । तद्वददि-
तिरित्युक्ते दितिसदृशीत्यर्थः संभवत्येव । अयं हि नञ इवार्थः । तदभ्युपगमेन
मां दितिसदृशीं करोतु भवानित्यर्थः । ननु तत्सदृशीकरणेन तव किमायातीति
ति चेदत्राह— इह लोके निम्नतले कूपाद्यधःस्थले विनिपेतुषां विनिपतितानां
समतलस्याधिगमः समस्थले प्राप्तिरपि समुन्नतिरुच्चैःपदाधिगमः । यत् तस्मा-
दिदमुक्तमित्यर्थः । अत इदानीं दितितुल्यत्वलाभादेवोत्कृष्टतां लप्स्यत इति
भावः ॥ ५ ॥

अथ मुनिर्निजगाद कृतं शुचा
भवतमामदिते धृतिशालिनी ।
तनुभृतामहितं च हितं च य-
न्नियतिराकलयत्यनवास्थितम् ॥ ६ ॥

अथेति । अथानन्तरं मुनिः काश्यपो निजगाद निगदितवान् । हे अदिते शुचा कृतं दुःखेनालम् । धृतिशालिनी धैर्ययुक्ता भवतमाम् अतिशयेन धीरा भव । यद्यस्माद्धेतोर्नियतिः कालस्वरूप ईश्वरः तनुभृतां शरीरिणाम् । अहितमप्रियं च हितमिष्टं च अनवस्थितं व्यवस्थारहितमाकलयत्युत्पादयति । कदाचित् किञ्चिदनुभावयतीत्येव । तादृगदृष्टमपरिज्ञेयमेवेति भावः ॥ ६ ॥

उपदिशामि विशालविलोचने
सपदिसिद्धिविधायि पयोव्रतम् ।
इदमितश्चतुरोऽष्ट च वासरान्
समनुतिष्ठ समाधिमती सती ॥ ७ ॥

उपदिशामीति । हे विशालविलोचने सुन्दरि सपदि क्षिप्रमेव सिद्धिविधायि समीहितकार्यस्य सर्वस्यापि सिद्धिं कुर्वत् पयोव्रतं नाम व्रतविशेषमुपदिशामि त्वां ग्राहयामि । इदं व्रतं इतोऽस्माद्दिवसादारभ्य चतुरोऽष्ट च वासरान् द्वादशदिनानि समाधिमती नियमवती सती समनुतिष्ठ सम्यग्विधेहि ॥ ७ ॥

प्रवरमन्त्रजपेन जनार्दनो
भृशतरं त्वयि तुष्टिमवाप्स्यति ।
इति वदन्नचिरादुपादिष्टवा-
नादितये मुदितः स पयोव्रतम् ॥ ८ ॥

प्रवरेति । प्रवरस्य प्रकृष्टतमस्य मयोपदेक्ष्यमाणस्य मन्त्रस्य जपेन हेतुना जनार्दनो भगवान् महाविष्णुस्त्वयि भृशतरमत्यर्थं तुष्टिमवाप्स्यति प्रसन्नो भविष्यति । तत्प्रसादानन्तरमेव समीहितसिद्धिरिति भावः । इति वदन् काश्यपोऽचिरात् क्षिप्रमदितये मुदितः सन् पयोव्रतमुपादिष्टवान् । तन्मन्त्रोपदेशं कृतवानित्यर्थः ॥ ८ ॥

तदुपदिष्टमनुत्तममादरा-
दिदितिराशु समारभत व्रतम् ।
विमलपूतमनोमुकुरोदर-
प्रकटबिम्बितविष्णुपदाम्बुजा ॥ ९ ॥

तदिति । अदितिस्तदुपदिष्टं तेन काश्यपेनोपदिष्टमनुत्तममतिशयेनो-त्तमम् । अस्मादपरमुत्तमं नास्तीत्यनुत्तमम् । व्रतं पयोव्रतमादरादास्तिक्येनाशु समारभताऽरब्धवती । कीदृशी । विमले निर्दोषे पूते विशुद्धे मनस्येव मुकुरोदरे दर्पणोदरे प्रकटं यथा भवति तथा बिम्बितं प्रतिफलितं विष्णुपदाम्बुजं यस्याः । ध्यानदृष्ट्या हृदि स्फुटप्रदर्शित(पर ? हरि)चरणाम्बुजाभूदित्यर्थः ॥ ९ ॥

अवसितौ नियमस्य तदग्रत-
स्तरुणनीलवलाहकमेचकम् ।
धृतगदारिदराब्जचतुर्भुजं
मधुरिपुर्वपुराविरभावयत् ॥ १० ॥

... ... ... धृतगदारिदराब्जानि कौमोदकीसुदर्शनपाञ्चजन्यपद्मानि ... ... ... ...चत्वारो भुजा यस्य तादृशम् । इदं श्रीवत्सकौस्तुभ-वनमालापीताम्बरमकरकुण्डलमणिमकुटकटकाङ्गदादेरप्युपलक्षणं द्रष्टव्यम् ॥१०॥

हरिहयारिपराभवनुत्तये
तव सुतो भवितास्मि तपोधने ।
इति वदन्नदितिं मुदितां व्यधा-
त्तदनु तत्क्षणमन्तरधाच्च सः ॥ ११ ॥

हरिहयेति । हे तपोधने! तवानेन तपसा सन्तुष्टोऽस्मीति संबुद्ध्यभि-प्रायः । हरिहयस्येन्द्रस्यारेः शत्रोर्महाबलेः सकाशाद् यः पराभवः पराजयः तस्य नुत्तये अपनोदनार्थमहं तव सुतो भवितास्मि त्वद्गर्भमाविश्य जनिष्यामि । इति वदन्नदितिं मुदि तां प्रीतां व्यधात् । स मधुरिपुस्तदनन्तरं तत्क्षणं क्षिप्रमेवान्तरधाच्चान्तर्हितोऽभवच्च ॥ ११ ॥

मुनिकुलप्रवरस्य तपस्यतो
मनसि सन्निहितो मधुसूदनः ।
अदितिगर्भमथो स समक्रमी-
दवृधदत्र च विश्वमुदा समम् ॥ १२ ॥

मुनीति । मधुसूदनः तपस्यतः तपसि वर्तमानस्य मुनिकुलप्रवरस्य काश्यपस्य मनसि सन्निहितः सान्निधानं कुर्वन् अथो तदनन्तरमदितेर्गर्भं समक्रमीत् समाक्रान्तवान् । अत्रादितिगर्भे विश्वेषां जनानां मुदा हर्षेण सम सोऽवृधच्च क्रमेण ववृधे च ॥ १२ ॥

श्रवणसम्मिलिते हरिवासरे
भुवनशोकतमोपहमुज्ज्वलम् ।
अदितिरेनमसूत चतुर्भुजं
हरिदिवेन्द्रधवा च दिवाकरम् ॥ १३ ॥

श्रवणेति । अनन्तरमदितिः श्रवणसम्मिलिते हरिवासरे श्रवणद्वादश्यामेनं चतुर्भुजं मधुसूदनमसूत प्रसूतवती । कीदृशम् । भुवनानां लोकानां शोकरूपं तमो हन्तीति तथाभूतमुज्ज्वलं दीप्यमानम् । चतुर्भुजमित्यन्यस्यापि भगवच्चिह्नस्योपलक्षणम् । इन्द्रो धवो भर्ता यस्याः सा इन्द्रधवा हरित् प्राची दिक् दिवाकरं सूर्यमिव । अत्रापि चतुर्भुजमित्यनुषज्यते । सूर्यस्य विष्णुस्वरूपत्वात् ॥ १३ ॥

कटककुण्डलहारकिरीटिने
करधृतारिगदाम्बुजकम्बवे
नवकलायरुचे वनमालिने
नतिमकुर्वत पुष्पकिराः सुराः ॥ १४ ॥

कटकेति । पुष्पाणि किरन्ति वर्षन्तीति पुष्पकिराः । 'इगुपधाज्ञाप्रीकिरः कः' इति कप्रत्ययान्तः । सुरा देवा कटककुण्डलादीन्यस्य सन्तीति तादृशाय । करैर्धृता अर्यादयश्चक्रादयो येन । नवकलायरुचे नूतनतापिञ्छद्युतये वनमालिने तस्मै भगवते नतिमकुर्वत नमस्कारमकुर्वन् ॥ १४ ॥

जय जयाच्युत विश्वपते विभो
फलवदातनुषे जनुरावयोः ।
अदितिकाश्यपयोरिति नम्रयो-
रयमलक्षि पटुर्बटुवामनः ॥ १५ ॥

जयेति । च्युतिर्न भवतीत्यच्युतः । हे अच्युत विश्वेषां पते विभो-विश्वव्याप्त ! त्वं जय जय । आवयोरदितेर्मम च जनुर्जननं फलवदातनुषे सफलं करोषि इत्येवं स्तुत्वादितिकाश्यपयोर्नम्रयोर्नमनशीलयोः कृतनमस्कारयोः सतोरेव अयं चतुर्भुजोऽपि पटुर्विदग्धो वटुर्वामनरूपो माणवकरूपोऽलक्षि लक्षितोऽभूत् ॥ १५ ॥

अथ कृतोपनयः परमेष्ठिना
विधिवदाहितकृत्यतयोज्ज्वलः ।
अजिनदण्डकमण्डलुमण्डितो
भृशमशोभयदाश्रममादिमम् ॥ १६ ॥

अथेति वटुवामन इत्यनुवर्तते । अथानन्तरं परमेष्ठिना ब्रह्मणा कृतोपनयः विहितोपनयनविधिः विधिवद्यथाविधि आहितकृत्यतया समनुष्ठितब्रह्मचर्याश्रमकर्मतयोज्ज्वलो दीप्ततेजा अजिनेन कृष्णाजिनेन दण्डेन पलाशदण्डेन कमण्डलुना जलपात्रेण मण्डितोऽलङ्कृतः सन् आदौ भवमादिममाश्रमं ब्रह्मचर्याश्रमं भृशमत्यर्थमशोभयत् शोभितं कृतवान् ॥ १६ ॥

तुरगमेधमहाध्वरदीक्षितो
बलिरसौ निवसत्युपनर्मदम् ।
इति निशम्य स कैतववामनः
प्रचलति स्म ततः पितरौ नमन् ॥ १७ ॥

तुरगेति । स कैतववामनः कपटवटुः । असौ बलिर्महाबलिर्दानवेन्द्र उपनर्मदं नर्मदाया रेवायाः समीपे तुरगमेधे अश्वमेधनाम्नि महाध्वरे महाक्रतौ दीक्षितः कृतदीक्षाप्रवेशो निवसतीति निशम्य मुनिजनमुखादाकर्ण्य पितरौ नमन्नदितिकाश्यपौ प्रणम्य । तदनुज्ञां प्रतिगृह्णन्नित्यर्थः । ततस्तस्मान्मारीचाश्रमात् प्रचलति स्म प्रतस्थे । १७ ॥

दरविकस्वरपङ्कजकुड्मला-
त्समुपचित्य परागभरं वहन् ।
तमथ भृत्य इवाम्बुदजं मुद-
मनुजगाम विभातसमीरणः ॥ १८ ॥

दरेति । अथानन्तरं विभातसमीरणः प्रभातवायुर्दरविकस्वरादीषद्विकसनशीलात् पङ्कजकुड्मलात्सकाशात् परागभरं सुमनोरजोरूपं भरं भारं समुपचित्य सम्यक् सञ्चितं कृत्वा वहन् भृत्य इव । यथा भृत्यः स्वामिनि प्रचलिते तस्य नित्योपकरणभाण्डं समूहीकृत्य शिरसि वहन्ननुगच्छति तथानुजगामानुगतवान् । अत्र च वायोरानुकूल्येनानुगमनं गच्छतः कार्यसिद्धिं सूचयेदित्येतदपि ध्वनितम् ॥ १८ ॥

विगतनिद्रविशृङ्खलनिष्पतत्-
पतगपक्षपरिक्षुभितैर्द्रुमैः ।
मधुपझङ्कृतिमङ्गलवादिभिः
स्वकुसुमैरधिवर्त्मपूजि सः ॥ १९ ॥

विगतेति । कैतववामनः अधिवर्त्म वर्त्मनि । अव्ययीभावः । अनश्चेति समासान्तः । द्रुमैः वृक्षैः स्वकुसुमैरपूजि पूजितः । कीदृशैः । विगतनिद्रं प्रातरेव निद्रामपहाय विशृङ्खलमप्रतिबन्धं यथा तथा निष्पततामुपगच्छतां पतगानां पक्षिणां पक्षैर्गरुन्मरुद्भिः परिक्षुभितैः परिकम्पितैः । मधुपानां झङ्कृत्या कलकलेन मङ्गलवादिभिः कुशलस्तोत्रपाठकैः ॥ १९ ॥

प्रकथनौपयिकीमपनिद्रतां
शुककुलाय कुलायजुषे दिशन् ।
मुरजनादघनोऽस्य मनोऽहरत्
कलकपोतकपोतगलध्वनिः ॥ २० ॥

प्रकथनेति । कलो मधुरः कपोतकपोतानां पारावतशिशूनां गलध्वनिः कण्ठनादोऽस्य वामनस्य मनोऽहरत अहृत । मनोमोदं चकारेत्यर्थः । मुरजस्य मृदङ्गस्य नाद इव घनः सान्द्रः । कुलायजुषे कुलायवर्तिने शुककुलाय शुकसमूहाय प्रकथनौपयिकीं प्रकथनस्य प्रजल्पनस्यौपयिकीं उपयोगभूतामप-

निद्रतां प्रबोधं दिशन् प्रतिपादयन् । कपोतशब्दश्रवणेन शुकाः प्रबुध्यन्ते । स च प्रबोधो जल्पनस्य प्रवर्तकत्वादुपयुज्यते ॥ २० ॥

जलधिजाकुचकुङ्कुमपङ्किलं
किमुत कौस्तुभकान्तिकरम्बितम् ।
इति किल भ्रमकारि नवातप-
च्छुरितमस्य रराज भुजान्तरम् ॥ २१ ॥

जलधिजेति । अस्य वामनस्य भगवतो भुजान्तरमुरःस्थलं नवातपेन बालार्करोचिषा छुरितं स्पृष्टं सद् रराज शुशुभे । मरतकश्यामलमस्य वक्षः पाटलबालातपप्रसक्तत्वादतिशयरमणीयशोभमभूदित्यर्थः । अत्र सन्देहमुपन्यस्यति । जलधिजाया लक्ष्म्याः कुचकुङ्कुमेन तदालिङ्गनसङ्क्रान्तेन घुसृणरसेन पङ्किलं सञ्जातपङ्कं किमुत । अथवा कौस्तुभस्य कान्त्या करम्बितं व्याप्तं किमुत । इदमुभयमप्याशङ्कनीयम् । विष्णुवक्षःस्थानम् इत्येवं भ्रमकारि सन्देहजनकं सद् रराजेति सम्बन्धः ॥ २१ ॥

प्रथमतोऽधिगतह्रसिमापि सन्
क्रमधृतप्रथिमा भृशमूष्मलः ।
रविरुचां निचयो जगदानशे
पिशुनयन्निव तस्य चिकीर्षितम् ॥ २२ ॥

प्रथमत इति । रविरुचां सूर्यरश्मीनां निचयः समूहः प्रथमत आदौ अधिगतह्रसिमा प्राप्तह्रस्वभावस्तथा सन्नपि क्रमेण धृतप्रथिमा विस्तारं गच्छन् भृशमतिशयेनोष्मलः प्रतापवान् जगदानशे सर्वभुवनं व्याप्नोति स्म । तस्य कैतववामनकस्य चिकीर्षितं कर्तुमिष्यमाणं प्रस्तावं पिशुनयन् सूचयन् इव । सोऽप्यादौ ह्रस्वः सन् क्रमेण प्रवृद्धशरीरः सन् जगत्त्रयमाक्रमितुमुपक्रमते ॥ २२ ॥

अथ वनादिसरःसरितः शनैः
समतिलङ्घ्य स विन्ध्यमहीभृतः ।
मदकलेभकपोलनिपीडन-
त्रुटितचन्दनवाटमगात्तटम् ॥ २३ ॥

अथेति । अथानन्तरं वनादीनि शनैर्मन्दमतिलङ्घ्यातिक्रम्य स कैतव-वामनः विन्ध्यमहीभृतो मदकलानां मदोत्कटानामिभानां यत् कपोलनिपीडनं गण्डस्थलेन कण्डूतिप्रशमनाय यद् घर्षणं तेन त्रुटिताः खण्डिताश्चन्दनवाटा-श्चन्द्रनवृक्षसमूहा यस्मिंस्तादृशं तटमुपत्यकाभुवम् अगात् प्राप्तवान् ॥ २ ॥ ३

अपि गभीरमदोषतयाशयं
प्रकटयन्त्यनिशं ध्वनिशालिनी ।
सुकविसूक्तिरिवाधिकशर्मदा
सपदि तेन समैयत नर्मदा ॥ २४ ॥

अपीति । तेन वटुना सपदि नर्मदा रेवानदी समैयत सम्प्राप्तेत्यर्थः । इण्गतावित्यस्मात्कर्मणि लङि रूपम् । कीदृशी । गभीरमप्यगाधमप्याशय-मधःस्थलम् अदोषतया जलस्य स्वच्छत्वात् प्रकटयन्ती प्रकाशयन्ती अनिशं सर्वदा ध्वनिशालिनी तरङ्गघोषवती । सुकवीनां कालिदासादिसत्कवीनां सूक्तिरिव वचनानां प्रपञ्च इवाधिकशर्मदा अत्यर्थसुखप्रदायिनी । सूक्तिपक्षे गभीरं कठिनमप्याशयमर्थतात्पर्यं निर्दोषतया काव्यदोषराहित्यात् प्रसाद-गुणयुक्तत्वात् प्रकटयन्ती व्यक्तावबोधानुकूल्यतां नयन्ती । ध्वनिशालिनी । ध्वनिर्नाम काव्यजीवितमुपस्कारकम् । तद्वतीति व्याख्येयम् ॥ २४ ॥

करिकरालकटावटनिर्गल-
न्मदजलाविलवीचिपरम्परा॒म् ।
तटशिलास्खलनोच्चलदारवां
द्रुततरं स ततार तरङ्गिणीम् ॥ २५ ॥

करीति । स वटुवामनो द्रुततरं क्षिप्रं तरङ्गिणीं नर्मदां ततार तीर्ण-वान् । कीदृशीम् । करिणां करालेभ्यो विशालेभ्यः 'करालं दन्तुरे तुङ्गे विशाले विकृतेऽपि च' इति वैजयन्ती । कटावटेभ्यो गण्डगर्तेभ्यो निर्गल-द्भिर्निपतद्भिः मदजलैराविला कलुषा वीचिपरम्परा तरङ्गपङ्क्तिर्यस्याः । तटशिलासु यत्स्खलनमास्फालनं तत उच्चलन्त उद्भवन्त आरवाः शब्दा यस्यास्तादृशीमिति सम्बन्धः ॥ २५ ॥

अथ तदुत्तररोधसि निस्सरत्-
प्रचुरहव्यसुगन्धिसमीरणाम् ।

वितत धूमविराजिवियत्पथा-
मकलयत् स पुरोऽध्वरशालिकाम् ॥ २६ ॥

अथेति । अथ नर्मदातरणानन्तरं तस्यास्तरङ्गिण्या उत्तररोधसि उत्तरतीरे निःसरन्तः प्रसरन्तः प्रचुराः प्रवृद्धाः हव्यसुगन्धा हव्यद्रव्यसम्पर्क-सुरभयः समीरणाः यस्याः । विततेन व्याप्तेन धूमेन विराजी व्यापनशीलः वियत्पथो गगनमार्गो यत्संबन्धी तादृशीमध्वरशालिकां महाबलियज्ञशालां स पुरोऽकलयत् पुरोभागे दृष्टवान् ॥ २६ ॥

अभिससार स सान्द्रतरस्फुर-
न्निजशरीरमरीचिमनोहरः ।
सकलसम्मदसङ्घटनापटु-
र्वटुरमूमुडुराडिव शर्वरीम् ॥ २७ ॥

अभीति । वटुर्भगवानमूमध्वरशालिकामभिससार चाभिगतवान् च । सान्द्रतरमतिप्रवर्द्धमानं यथा तथा स्फुरन्तः प्रकाशमाना निजशरीरस्य मरीचयो ये रश्मय. तैर्मनोहरः । सकलानां जनानां सम्मदस्य हर्षस्य सङ्घटनायां सम्यगुपपादने पटुः समर्थः । उडुराट् चन्द्रः शर्वरीं रात्रिमिव । विशेषण-द्वयमपि साधारणम् ॥ २७ ॥

शशधरोऽयमुपैति कुतः शश-
स्तपन एव नु न प्रतपत्यसौ ।
मनसिजो नु स नैव शरीरवा-
निति जना व्यवदन्त तदीक्षकाः ॥ २८ ॥

शशेति । तदीक्षकास्तस्य भगवत ईक्षका द्रष्टारो जना इति वक्ष्य-माणप्रकारेण व्यवदन्त वादं कृतवन्तः । विविधं प्रालपन्नित्यर्थः । किंप्रकारम् । अयं शशधर उपैति इति कश्चिदवदत् । शशधरश्चेत् शशः कलङ्कमृगः कुतः सोऽत्र न दृश्यते । तर्हि तपनः सूर्य एवोपैति नु । नेदमपि घटते । असौ न प्रतपति । सूर्यश्चेत् प्रतपत्येव । तर्हि मनसिजः काम एव नु । तदपि न सङ्घटते । स मनसिजः शरीरवान् न भवति । अस्य त्वतिमनोज्ञं दृश्यते शरीरमित्यादि विविधं सन्दिह्य विप्रलेपुः ॥ २८ ॥

भृगुभिरागमितोऽध्वरशालिका-
मुरुमहाः स चतुर्थ इवानलः ।
विधिवदर्घ्यमुखैरभिपूजितो
विनयभक्तिमयस्य महाबलेः ॥ २९ ॥

भृगुभिरिति । स भगवान् भृगुभिरध्वरशालिकामागमितः प्रवेशितः । उरुमहाः प्रवृद्धतेजाश्चतुर्थोऽनल इव त्रेताग्निरिव विनयभक्तिमयस्य तन्मयस्य महाबलेरर्घ्यमुखैरर्घ्यपाद्यादिभिर्विधिवद्यथाविधि अभिपूजितः सम्यक्पुरस्कृतो बभूवेति शेषः ॥ २९ ॥

अजिनकल्पितमासनमास्थितः
स्मितसुधाञ्चितवक्त्रसुधाकरः ।
सविनयेन कृताञ्जलिनामुना
निजगदे जगदेकपतिर्वटुः ॥ ३० ॥

अजिनेति । अजिनेन कृष्णमृगचर्मणा कल्पितं विहितमासनमास्थितः स्मितसुधया मन्दहासामृतेनाञ्चितः शोभितो वक्त्रसुधाकरो मुखचन्द्रो यस्य सः । तादृशो जगतामेकपतिर्वटुः वटुरूपो भगवान् महाविष्णुः सविनयेन विनयवता कृताञ्जलिनाञ्जलिं कृतवतामुना महाबलिना निजगदे निगदितः ॥ ३० ॥

अखिलचेतनलोचनरोचनै-
रमृतबन्धुभिरङ्गरुचीचयैः ।
द्विजकुमार ममान्तरमिन्द्रियं
हरसि चन्द्र इवातिमनोहरः ॥ ३१ ॥

अखिलेति । हे द्विजकुमार ! अखिलानां चेतनानां प्राणिनाम् । 'प्राणी तु चेतनो जन्मी' इत्यमरः । लोचनेभ्यो रोचनै रुचिं कुर्वद्भिरमृतबन्धुभिः सुधासदृशैरङ्गरुचीनामवयवप्रभाणां चयैः सन्ततिभिस्त्वं चन्द्र इवातिमनोहरः सन् ममान्तरमिन्द्रियं मनो हरसि समावर्जयसि ॥ ३१ ॥

कतममङ्ग करोषि महत्तरं
पविमपामिव शीतलदीधितिः ।
मणिरिवापि च रोहणभूधरं
निजसमुद्भवकारणतां गतम् ॥ ३२ ॥

कतमम् इति । अङ्ग हे कुमार! निजसमुद्भवस्यात्मजननस्य कारणतां गतं हेतुभूतं कतमं जनं महत्तरमतिशयेन महान्तं करोषि । कस्ते जनयितेति प्रश्नार्थः । शीतलदीधितिश्चन्द्रोऽपां पतिं समुद्रमिव । मणिर्वैडूर्यरत्नं रोहणभूधरं विदूराद्रिमिव च । तथोत्पन्नेनाम्बुधिरोहणौ महान्तावभूताम् । तद्वत् कतममात्मोत्पत्त्या महान्तं करोषीति । ब्रूहीति शेषः ॥ ३२ ॥

कतमदर्भक गोत्रमलङ्करो-
ष्युभयवंशविशुद्धिमदुच्चकैः ।
इह हि हेतुमतो गुण ईक्षितः
स खलु शंसति हेतुगुणोत्करान् ॥ ३३ ॥

कतमद् इति । हे अर्भक! उच्चकैरुन्नततरमुभयोर्मातृपितृसम्बन्धिनोर्वंशयोर्विशुद्धिमद्विशुद्धियुक्तं कतमद्गोत्रं त्वमलङ्करोषि । कस्यां परम्परायामुद्भूतो भवानिति प्रश्नः । तस्योभयवंशविशुद्धिमत्त्वमनुमीयत एवेत्याह । इह लोके हेतुमतः हेतुरस्यास्तीति हेतुमान् तस्य कार्यभूतस्य यो गुण ईक्षितः प्रत्यक्षदृष्टः स खलु गुणो हेतोः कारणभूतस्य गुणोत्करान् गुणसम्पदः शंसति स्पष्टं प्रकथयति । ज्ञापयतीत्यर्थः । कारणगुणो हि कार्ये दृश्यत इति कार्यगुणेन कारणगुणोऽनुमेयः स्यादेवेत्यर्थः ॥ ३३ ॥

*रुचितवस्तुसमास्वदनोत्सवं
प्रतिरुणद्धि रुजेव जनस्य या ।
न खलु सेयमकिञ्चनताधुना
वितनुते तव कच्चिदिमं श्रमम् ॥ ३४ ॥

रुचित इति । अथ तदागमप्रयोजनं पृच्छति । या अकिञ्चनता दरिद्रता । किञ्चिदपि नास्तीत्यकिञ्चनः, तस्य भावोऽकिञ्चनता । रुजेव रोग इव जनस्य रुचितस्य वस्तुनः कनकवनितावसनसदनादेरभिलषितस्य पदार्थस्य समास्वदनं सम्यगास्वादनम् । अनुभव इति यावत् । तद्रूपमुत्सवं प्रमोदहेतुत्वादुत्सवसदृशम् । प्रतिरुणद्धि प्रबाधते । रोगपक्षे खाद्यपेयभोज्याद्याहारसुखमपथ्यभयात् प्रतिरुणद्धि । सेयं तथाभूता अकिञ्चनता कर्त्री तवेमं श्रमं

* रुचिर इति पाठान्तरम् ।

स्वयमागमनरूपं खेदमधुना न खलु कच्चिद्वितनुते विदधाति । दरिद्रताहेतोरर्थयाचनार्थमत्रागतः कच्चिदिति प्रश्नः ॥ ३४ ॥

अथ तु धैर्यमिवाशु मनोभवो
यश इवोज्ज्वलमाजिपराभवः* ।
श्रुतिमिवाविनयो न निहन्ति[१] वा
तव तपोधन वैरिजनस्तपः ॥ ३५ ॥

अथेति । अथ तु अथवा हे तपोधन! वैरिजनः शत्रुवर्गः तव तपो न निहन्ति वा । किमिव । मनोभवः काम आशु क्षिप्रं धैर्यमिव । स तु धैर्यं निवर्तयति । आजिपराभवः समरे पराभूतिरुज्ज्वलं यश इव । अविनयो विनयाभावः (श्रुतिमिव) श्रवणमिव (शंसू ? शास्त्र)ग्रहणमिव ॥ ३५ ॥

समुचितां कुलशीलवयोगुणै-
र्गुणवता भवतोपयियंसिताम् ।
न खलु कश्चन कामपि कन्यका-
मसुहृदेत्य हठेन जिहीर्षति ॥ ३६ ॥

समुचिताम् इति । अथवा कुलेनाभिजात्येन शीलेन स्वभावेन वयसा गुणैः सौन्दर्यादिभिश्च समुचितां स्वकुटुम्बिनीभावयोग्यां गुणवता भवत उपयियंसितां उपयमनं कर्तुमभिलषिताम् । विवोढुमिष्यमाणामित्यर्थः । तादृशीं कामपि कन्यकामसुहृच्छत्रुरेत्यागत्य हठेन बलात्कारेण जिहीर्षति हर्तुमिच्छति न खलु कश्चन .... .... .... ॥ ३६ ॥

कथय किं बहुना यदभीप्सितं
तदिह ते तरसा वितरिष्यते ।
त्रिभुवनप्रभुणा बलिनामुना
दुरुपपादमिहास्ति न किञ्चन ॥ ३७ ॥

कथयेति । किं बहुना बहुविकल्पितजल्पितेन किं प्रयोजनम् । कथयाभिधत्स्व । इहास्मत्सकाशाद् यदभीप्सितम् अभिप्राप्तुमभिलषितं तद्वस्तु तरसा क्षिप्रमेव ते वितरिष्यते मया सम्प्रदास्यते । इह लोके त्रिभुवनस्य

* पराजय इति पाठान्तरम् । १. विहन्ति इति पाठान्तरम् ।

प्रभुणामुना बलिना दुरुपपादं दुष्करं दुस्साधं वस्तु किञ्चनापि नास्ति। तस्वाकथनमेवात्र विलम्ब इति भावः ॥ ३७ ॥

मधुरहासमनोज्ञतरां गिरं
गदितवानथ कैतववामनः ।
उचितमेतदुदारवदान्यता-
व्रतधरस्य बले! भवतो वचः ॥ ३८ ॥

मधुरेति। अथानन्तरं कैतववामनो मधुरहासेन मन्दस्मितेन मनोज्ञतराम् अतिमनोहरां गिरं गदितवानुक्तवान्। तव त्रिभुवनप्रभुत्वमिदानीं कण्ठगतप्राणमास्त इत्यभिप्रायो हासस्य । हे बले! उदार उत्कृष्टे वदान्यताव्रते (............) दानशौण्डस्वरूपं वदान्यैरेव वक्तव्यमित्यर्थः ॥ ३८ ॥

असुरता जनता जनतापिनी-
मसुरतां तव निन्दति केवलम् ।
समतया मतया तु धियेक्षितो
बुधजनैरनवद्यगुणो भवान् ॥ ३९ ॥

अस्विति। असुषु प्राणेषु (रता) तत्परा स्वप्राणतर्पणमात्रप्रयोजना जनता जनसमूहः केवलं तव जनतापिनीं जनान् तापयितुं पीडयितुं शीलमस्या इति तथाभूतामसुरतामसुरत्वं निन्दति धिक्करोति। बुधजनैर्विद्वद्भिः समतया सर्वत्र समत्वेन मतयाभिप्रेतया धिया बुद्ध्या ईक्षितस्तु भवाननवद्यगुणो निर्दोषगुणो भवति। स्वकार्यपरा जना निन्दन्तु नाम। ततस्तव न क्षतिरिति भावः ॥ ३९ ॥

कनकवृष्टिमुचि त्वयि सन्ततं
सुदिनकारिणि सर्वशरीरिणाम् ।
सलिलवृष्टिमुचि क्वचिदम्बुदे
क इव तुष्यति दुर्दिनकारिणि ॥ ४० ॥

कनकेति। सर्वशरीरिणामखिलदेहिनां सुदिनकारिणि शोभनं दिनं कुर्वति, समीहितार्थलाभात्, तादृशे त्वयि कनकमयीं वृष्टिं मुञ्चति सति। अर्थिष्वर्थवर्षणं कुर्वतीत्यर्थः। सन्ततं; सार्वकालिकमिदं तव वर्ष(ण)मित्यर्थः।

क्वचित् कुत्रचित् प्रदेशे न सर्वत्र । सलिलवृष्टिमुचि जलमात्रवर्षके अम्बुदे मेघे किन्तु दुर्दिनकारिणि । '(मेघ)छन्नेऽह्नि दुर्दिनम्' इत्यमरः । तत्कुर्वसि क इव को जन(......) ॥

*मम (तरा ? तु ना)स्ति मदा(घ्य ? न्ध्य)विधायिषु
प्रणयिता वनिताकनकादिषु ।
गुणगणैरिव यैर्दृढसंयतः
पुनरितः पुरुषो न विमुच्यते ॥ ४१ ॥

परिमितां त्रिभिरेव पदैर्मम
प्रदिश मह्यमये कुहचिन्महीम् ।
अपरभूमिषु भूमिमभीप्सता-
मनलकार्यमनार्यमुशन्ति यत् ॥ ४२ ॥

असुरराडवदत्तु भुवनप्रभु-
र्न खलु यच्छति तुच्छमिदं वटो ।
न कथमिच्छति वारिधिमेखला-
मयि भवानखिलामपि मेदिनीम् ॥ ४३ ॥

×(......)याचितुस्तव वटुत्वमेवात्र प्रकाशितमिति भावः । अयि भवान् वारिधिमेखलामखिलां निश्शेषामपि मेदिनीं कथं नेच्छति । तामपीच्छति चेदहं प्रयच्छामीति भावः । इत्यसुरराड् बलिरवददुक्तवान् ॥ ४३ ॥

पुनरप्याह —

स हि महाबलिरस्मि यतोऽर्थिनः
समधिगम्य समस्तसमीहितम् ।
विगणयन्ति न वित्तपमप्यमी
दिविषदां पतिमप्यवमन्वते ॥ ४४ ॥

स इति । यतो यस्मान्महाबलेः सकाशात्समस्तं समीहितमभिलषितं वस्तु समधिगम्य सम्यग्लब्ध्वार्थिनो याचका अमी वित्तपं तं धनपतिमपि न विगणयन्ति न बहुमन्यन्ते । दिविषदां पतिमिन्द्रमपि अवमन्वते

---

* पद्यमेतदधिकतया 'क' पाठे वर्तते ।

× अत्र किञ्चिद् गलितमिति प्रतिभाति ।

निन्दन्ति । ताभ्यामप्यधिकधनशालिनोऽर्थिनो भवन्तीति भावः । स हि तादृ-ग्वितरणशीलो महाबलिरस्मि ॥ ४४ ॥

यदभिवाञ्छति यः स ततोऽपरै-
र्न खलु तृप्यति कुप्यशतैरपि ।
प्रकृतितोऽपि पृथक्पृथगीप्सितं
जगदिति प्रहसन् वटुरब्रवीत् ॥ ४५ ॥

यदिति । वटुर्भगवान् प्रहसन्नब्रवीद् अभिहितवान् । यो जनो यद्वस्तु अभिवाञ्छति लब्धुमाकाङ्क्षति स जनस्ततः स्वाभिप्रेतादपरैः कुप्यशतैरपि स्वर्णादिद्रव्यशतैरपि(?) न तृप्यति न तृप्तो भवति। खलु प्रसिद्धोऽयमर्थ इत्यर्थः । तत्कुप्यशतमेव किं नेच्छतीति चेदत्राह — जगल्लोकः प्रकृतितः स्वभावेन पृथक्पृथगीप्सितं भिन्नाभिन्नाभिप्रायम् । तदुक्तम् —

'आकीटमाकेटभवैरि तुल्यः
स्वामीष्टलाभात् कृतकृत्यभावः ।
भिन्नस्पृहाणां प्रति चार्थमर्थं
द्विष्टत्वमिष्टत्वमपर्यवस्थम् '॥ इति ।

इत्यब्रवीदिति सम्बन्धः ॥ ४५ ॥

अथ तथास्तु यथात्थ वृथापटु-
र्वटुरसीत्यभिधाय महाबलौ ।
वसुमतीं वटवे प्रणिदित्सति
प्रणिजगाद जवादसुरावलिः ॥ ४६ ॥

अथेति । अथ भगवा यथा त्वं मामभिदधासि तथास्तु । त्वं तु वृथा-पटुर्मिथ्याप्रगल्भो वटुरसीत्यभिधाय महाबलौ वटवे वसुमतीं तत्प्रार्थितमात्रां भुवं प्रणिदित्सति प्रदातुमिच्छति जवात् क्षिप्रम् उपेत्येति शेषः । असुरावलिः दैत्यसमूहः प्रणिजगाद प्रकथयामास ॥ ४६ ॥

कपटवामन एष महामते !
कथमिहोज्झसि हन्त वसुन्धराम् ।
उदरानिद्रुतवह्निकणे भवा-
नुपनिधित्सति भस्मचये पटीम् ॥ ४७ ॥

कपटेति । महामते ! एष कपटकलनः कैतवब्रह्मचारी कश्चित् । हन्त कष्टम् । इहास्मिन् कपटवामने वसुन्धरां कथमुज्झसि वृथा त्यजासि । भवानिदानीमुदरनिह्नुतवह्निकणेऽन्तःपिहिताग्निस्तोकाङ्गारे भस्मचये पटीं वस्त्रमुपनिधित्सति उपनिधातुमिच्छति । अन्तर्गतकनकमविज्ञाय भस्मोपरि वस्त्रं प्रसारयति । तदेवैतस्मै भूम्यर्पणमित्यर्थः ॥ ४७ ॥

अयि निबोध सुरासुरवर्गयो-
र्मधुजिदेष हिताहितदर्शनः ।
निजरुचा निखिलं जगदाप्नुवन्
कमलकैरवयोरिव भानुमान् ॥ ४८ ॥

... .... .... अत्रापि निजरुच्येत्यादि साधारणम् ॥ ४८ ॥

विवरमल्पमवाप्य यथा द्रुमं
सपदि निष्कुषितं कुरुते कृमिः ।
नियतमेष तथा निखिलां मही-
मपजिहीर्षति संविधयान्यया ॥ ४९ ॥

विवरमिति । कृमिरल्पं विवरं सुषिरमवाप्य यथा द्रुमं सपदि निष्कुषितं कुरुतेऽन्तःसारं सर्वं (हृ?द)त्वा बहिर्निःसारयति तथैष वटुरपि निखिलां महीमपजिहीर्षति पदत्रयमितद्वारेण समस्तां भुवमपहर्तुमिच्छति। नियतं निश्चितोऽयमित्यर्थः । अनयाऽत्र प्रदर्शितया संविधया तुच्छमहीप्रार्थनाव्यापारेण महीमपजिहीर्षतीति सम्बन्धः ॥ ४९ ॥

अथ समेत्य जगाद कविः स्वयं
कथय वत्स ! क एष तव क्रमः ।
सततमेव चिखादिषतो द्रुवे
विषभृतोऽर्पयसि स्वयमङ्गुलीम् ॥ ५० ॥

अथेति । अथ तदनन्तरं कविः शुक्रमुनिः स्वयमुपेत्य जगाद गदितवान् । हे वत्स ! तवैष क्रमः आरम्भः कः किंरूपः । कथय ब्रूहि । सततमेव सर्वदैव । कारणं विनैव । चिखादिषतः खादितुमिच्छतो विषभृतः सर्पस्य मुखे

स्वयमङ्गुलीमर्पयसि । अयमदत्तामपि महीं जिहीर्षति । किं पुनः स्वयमेव दत्ता-
मिति भावः ॥ ५० ॥

सपदि दानजलं प्रतिसंहर
त्यज महासुर ! साहसमीदृशम् ।
प्रियचिकीर्षुरयं खलु वज्रिणो
ननु विवञ्चयिषत्यसुरानिमान् ॥ ५१ ॥

सपदीति । हे महासुर ! सपदि शीघ्रं दानजलं प्रतिसंहर दानार्थोपात्तं
जलं परित्यज । ईदृशं साहसं त्यज विसृज । अयं खलु वज्रिण इन्द्रस्य प्रिय-
चिकीर्षुः प्रियं कर्तुमिच्छुर्नन्विमानसुरान् विवञ्चयिषति व(ञ्चि ? ञ्चयि)तुमि-
च्छति । युष्मद्वञ्चनार्थं आरम्भ इत्यर्थः ॥ ५१ ॥

भवतु विष्णुरधृष्णुतया यदि
स्वयमिमं जनमर्दितुमागतः ।
तदहमेष ददामि मुदा मही-
मिति निरास्यत सोऽपि गिरा गुरुम् ॥ ५२ ॥

भवत्विति । भवतु एवमस्तु । विष्णुरधृष्णुतया असमर्थत्वेन हेतुना
स्वयमिमं जनं मामर्दितुं याचितुमागतो यदि तर्हि मुदा सन्तोषेणैव महीमेषोऽहं
ददामि अस्मै प्रतिपादयाम्येव । इत्युक्तः सोऽपि महाबलिरपि गुरुं स्वगुरुं
शुक्रं निरास्यत निरस्तवान् ॥ ५१ ॥

वदति देहिपदं पदमश्रियो
जगति यः सुतरामगतिः पुमान् ।
स पुनरस्तु सुधीरथवा कुधी-
र्न तदिदं विविनक्ति बहुप्रदः ॥ ५३ ॥

.... .... .... .... .... .... पुनः सुधीः सुबुद्धि-
रस्तु । अथवा कुधीर्दुर्बुद्धिरस्तु । तदिदं दुर्बुद्धिः सुबुद्धिर्वेति बहुप्रदो न विविन-
क्ति न विचारयति । याचकमात्रे वितरणशीलो हि बहुप्रदः । स त्वेवं न विचार-
यतीत्यर्थः ॥ ५२ ॥

हरिरयं यदि हन्त चिरेण मे
समुचितं खलु पात्रमुपस्थितम् ।
इति वदन् मतिमान् दितिजाग्रणी-
र्वसुमतीं वटवे सजलामदात् ॥ ५४ ॥

हरिरिति । अयमत्र वर्तमानो हरिर्यदि हन्त महाप्रसादः । चिरेण महता कालेन मे समुचितं पात्रं योग्यतमं प्रतिग्रहपात्रमुपस्थितम् । विष्णुरेव पात्रं संप्रदानकरणं जातश्चेत् निश्चितम् इति भावः । इत्येवंप्रकारं वदन् मतिमान् बुद्धिमान् दितिजाग्रणीरसुरश्रेष्ठो वटवे कैतववामनाय वसुमतीं भूमिं सजलां सोदकामदाद्दत्तवान् ॥ ५४ ॥

पीत्वा तोयं पीवरत्वं व्रजद्भि-
र्विद्युत्पिङ्गैर्भासुरभूषांशुजालैः ।
तुङ्गैरङ्गैर्विष्णुरुच्चैर्जजृम्भे
पूर्णव्योमा पुष्कलावर्तकश्रीः ॥ ५५ ॥

पीत्वेति । विष्णुस्तोयं पीत्वा पीवरत्वं व्रजद्भिः प्रथिमानमुपगतैः । विद्युदिव पिङ्गानि पाटलानि भासुराणि दीप्तानि भूषांशुजालानि कटकमकुटाद्यलङ्कारप्रभासमूहा येषां तादृशैस्तुङ्गैरुन्नतैरङ्गैः पूर्णव्योमा पूरितगगनावकाशः पुष्कलावर्तकश्रीः प्रलयमेघस्य श्रीरिव श्रीर्यस्य तथा सन्नुच्चैर्जजृम्भे अत्यन्तं प्रवृद्धोऽभूत् । तोयपानं विद्युत्पिङ्गत्वं क्रमप्रवृद्धत्वं च पुष्कलावर्तकसाधर्म्यम् । विष्णुरिति यथार्थनामाभूदिति साभिप्रायमत्र कर्तृपदम् ॥ ५५ ॥

एकेनैव पदेन चक्रमखिलं विक्रम्य भूमेर्दिवं
मित्सोर्मत्सरिणो विधूय विमतानुद्दत्वरं सत्वरम् ।
दैत्यारेरथ सत्यलोकवसतेर्नेदिष्ठमन्यत्पदं
नेनेक्ति स्म स कुण्डिकोदरभृतैरम्भोभिरम्भोजभूः ॥ ५६ ॥

एकेनेति । अथानन्तरं दैत्यारेरेकेन पदेनैव भूमेश्चक्रं भूवलयमखिलं विक्रम्याक्रम्य दिवं स्वर्गलोकं मित्सोर्मातुमिच्छोर्मत्सरिणो मत्सरेण योद्धुमभिगतान् विमतान् दैत्यान् विधूय निरस्य सत्वरमुद्दत्वरमुद्गमनशीलम् अत एव सत्यलोकवसतेरम्भोजभुवो नेदिष्ठमन्तिकतमं समीपागतमित्यर्थः । तथाभूतमन्यत् पदं द्वितीयमङ्घ्रिकमलं सत्यलोको वसतिरास्पदं यस्य सः अम्भोजभूर्ब्रह्मा

कुण्डिकोदरात् स्वकमण्डलुगर्भात् सृतैर्गलितैरम्भोभिर्नेनेक्ति स्म सिक्त्वा विशोधयामास । प्रक्षालनं कृतवानित्यर्थः । 'णिजिर् विशुद्धौ' इति जौहोत्यादिकस्य धातोर्लिटि रूपम् ॥ ५६ ॥

द्राघीयस्स्थूलनीलोपलकलितमहास्तम्भदम्भाच्छिदोऽस्मा-
दापो निष्यन्दमानाः सरसतरशरच्चन्द्रिकासान्द्रभासः ।
गङ्गासंज्ञाः समज्ञा इव भुवनपतेर्विश्वतोऽप्यश्नुवाना
वाताधूता विरेजुः सितपटघटिता वैजयन्तीर्जयन्त्यः ॥ ५७ ॥

द्राघीयस् इति । द्राघीयसा दीर्घतरेण स्थूलेन पृथुतरेण नीलोपलेन मरतकमणिना कलितस्य निर्मितस्य महास्तम्भस्य दम्भच्छिदोऽहमेव सर्वस्मात् स्थूलदीर्घ इत्यहंभावं छिन्दतस्ततोऽभ्य .... .... .... .... ....
.... ... .... .... भगवतो विष्णोः समज्ञाः कीर्तय इव विश्वतोऽप्यश्नुवानाः सर्वत्र व्याप्नुवाना आपो जलं वाताधूता स्वर्गानिलप्रकंपिता विरेजुः शुशुभिरे । सितपटेन धवलवाससा घटिता निर्मिता वैजयन्तीर्ध्वजपताका जयन्त्यः अभिभवन्त्यः । भगवत्पादस्य मरतकसादृश्याद् गङ्गाम्भसां च शरच्चान्द्रिकातुल्यत्वात् साधारणधर्मश्चेति द्रष्टव्यम् ॥ ५७ ॥

तदनु गरुडस्तत्रायातः पतत्ररुचिच्छटा-
कपिशितजगच्चक्रः शीघ्रं बबन्ध महाबलिम् ।
क्व पुनरधुना तार्तीयीकं पदं प्रणिधीयता-
मिति हि वदते मूर्धानं स्वं ददौ हरये बलिः ॥ ५८ ॥

तदिति । तदनु तदनन्तरं पतत्रयोः पक्षयोः रुचिच्छटया प्रभापटलेन कपिशितं पिङ्गीकृतं जगच्चक्रं येन तथाभूतो गरुडः शीघ्रं तत्रायातः आगतः सन् महाबलिं बबन्ध नियमितवान् । तार्तीयीकं तृतीयं पदमधुनेदानीं क्व पुनर्मया प्रणिधीयताम् । एकेन पदेन भूतलं(दले? मन्येन) स्वस्तलं मितम् । पदत्रयं च प्रतिश्रुतम् । तार्तीयीकेन कः प्रदेशो मातव्यः । इति हि एवंप्रकारं वदते पृच्छते हरये महाविष्णवे बलिः स्वमूर्धानं शिरो ददौ दत्तवान् । मम शिरस्येव तृतीयं पदं निवेश्यतामित्यभिप्रायेण प्रतिपादितवान् ॥ ५८ ॥

हरिरयं यदि हन्त चिरेण मे
समुचितं खलु पात्रमुपस्थितम् ।
इति वदन् मतिमान् दितिजाग्रणी-
र्वसुमतीं वटवे सजलामदात् ॥ ५४ ॥

हरिरिति । अयमत्र वर्तमानो हरिर्यदि हन्त महाप्रसादः । चिरेण महता कालेन मे समुचितं पात्रं योग्यतमं प्रतिग्रहपात्रमुपस्थितम् । विष्णुरेव पात्रं संप्रदानकरणं जातश्चेत् किमतःपरम् इति भावः । इत्येवंप्रकारं वदन् मतिमान् बुद्धिमान् दितिजाग्रणीरसुरश्रेष्ठो वटवे कैतववामनाय वसुवतीं भूमिं सजलां सोदकामदाद्दत्तवान् ॥ ५४ ॥

पीत्वा तोयं पीवरत्वं व्रजद्भि-
र्विद्युत्पिङ्गैरंशुभूषांशुजालैः ।
तुङ्गैरङ्गैर्विष्णुरुच्चैर्जजृम्भे
पूर्णव्योमा पुष्कलावर्तकश्रीः ॥ ५५ ॥

पीत्वेति । विष्णुस्तोयं पीत्वा पीवरत्वं व्रजद्भिः प्रथिमानमुपगतैः । विद्युदिव पिङ्गानि पाटलानि अंशूनि दीर्घाणि भूषांशुजालानि कटकमकुटाद्यलङ्कारप्रभासमूहा येषां तादृशैस्तुङ्गैरुन्नतैरङ्गैः पूर्णव्योमा पूरितगगनावकाशः पुष्कलावर्तकश्रीः प्रलयमेघस्य श्रीरिव श्रीर्यस्य तथा सन्नुच्चैर्जजृम्भे अत्यन्तं प्रवृद्धोऽभूत् । तोयपानं विद्युत्पिङ्गत्वं क्रमप्रवृद्धत्वं च पुष्कलावर्तकसाधर्म्यम् । विष्णुरिति यथार्थनामाभूदिति साभिप्रायमत्र कर्तृपदम् ॥ ५५ ॥

एकेनैव पदेन चक्रमखिलं विक्रम्य भूमेर्दिवं
मित्सोर्मत्सरिणो विधूय विमतानुद्गत्वरं सत्वरम् ।
दैत्यारेरथ सत्यलोकवसतेर्नेदिष्ठमन्यत्पदं
नेनेक्ति स्म स कुण्डिकोदरसृतैरम्भोभिरम्भोजभूः ॥ ५६ ॥

एकेनेति । अथानन्तरं दैत्यारेरेकेन पदेनैव भूमेश्चक्रं भूवलयमखिलं विक्रम्याक्रम्य दिवं स्वर्गलोकं मित्सोर्मातुमिच्छोर्मत्सरिणो मत्सरेण योद्धुमभिगतान् विमतान् दैत्यान् विधूय निरस्य सत्वरमुद्गत्वरमुद्गमनशीलम् अत एव सत्यलोकवसतेरम्भोजभुवो नेदिष्ठमन्तिकतमं समीपागतमित्यर्थः । तथाभूतमन्यत् पदं द्वितीयमङ्घ्रिकमलं सत्यलोको वसतिरास्पदं यस्य सः अम्भोजभूर्ब्रह्मा

कुण्डिकोदरात् स्वकमण्डलुगर्भात् स्रुतैर्गलितैरम्भोभिर्नेनेक्ति स्म सिक्त्वा विशोधयामास । प्रक्षालनं कृतवानित्यर्थः । 'णिजिर् विशुद्धौ' इति जौहोत्यादिकस्य धातोर्लेटि रूपम् ॥ ५६ ॥

द्राघीयस्स्थूलनीलोपलकलितमहास्तम्भदम्भच्छिद्रोऽस्मा-
दापो निष्यन्दमानाः सरसतरशरच्चन्द्रिकासान्द्रभासः ।
गङ्गासंज्ञाः समज्ञा इव भुवनपतेर्विश्वतोऽप्यश्नुवाना
वाताधूता विरेजुः सितपटघटिता वैजयन्तीर्जयन्त्यः ॥ ५७ ॥

द्राघीयस् इति । द्राघीयसा दीर्घतरेण स्थूलेन पृथुतरेण नीलोपलेन मरतकमणिना कलितस्य निर्मितस्य महास्तम्भस्य दम्भच्छिद्रोऽहमेव सर्वस्मात् स्थूलदीर्घ इत्यहंभावं छिन्दतस्ततोऽस्य .... .... .... .... ....
.... ... .... .... भगवतो विष्णोः समज्ञाः कीर्तय इव विश्वतोऽप्यश्नुवानाः सर्वत्र व्याप्नुवाना आपो जलं वाताधूता स्वर्गानिलप्रकंपिता विरेजुः शुशुभिरे । सितपटेन धवलवाससा घटिता निर्मिता वैजयन्तीर्ध्वजपताका जयन्त्यः अभिभवन्त्यः । भगवत्पादस्य मरतकसादृश्याद् गङ्गाम्भसां च शरच्चन्द्रिकातुल्यत्वात् साधारणधर्मश्चेति द्रष्टव्यम् ॥ ५७ ॥

तदनु गरुडस्तत्रायातः पतत्ररुचिच्छटा-
कपिशितजगच्चक्रः शीघ्रं बबन्ध महाबलिम् ।
क्व पुनरधुना तार्तीयीकं पदं प्रणिधीयता-
मिति हि वदते मूर्धानं स्वं ददौ हरये बलिः ॥ ५८ ॥

तदिति । तदनु तदनन्तरं पतत्रयोः पक्षयोः रुचिच्छटया प्रभापटलेन कपिशितं पिङ्गीकृतं जगच्चक्रं येन तथाभूतो गरुडः शीघ्रं तत्रायातः आगतः सन् महाबलिं बबन्ध नियमितवान् । तार्तीयीकं तृतीयं पदमधुनेदानीं क्व पुनर्मया प्रणिधीयताम् । एकेन पदेन भूतल(दले? मन्येन) स्वस्तलं मितम् । पदत्रयं च प्रतिश्रुतम् । तार्तीयीकेन कः प्रदेशो मातव्यः । इति हि एवंप्रकारं वदते पृच्छते हरये महाविष्णवे बलिः स्वमूर्धानं शिरो ददौ दत्तवान् । मम शिरस्येव तृतीयं पदं निवेश्यतामित्यभिप्रायेण प्रतिपादितवान् ॥ ५८ ॥

प्रह्लादस्तं प्राप्य निस्तन्द्रमस्तौ-
दस्तु व्यक्ताव्यक्तधाम्ने नमस्ते ।
बन्धच्छित्तौ बन्धक्लृप्तौ च पुंसा-
मीष्टे कोऽन्यस्त्वां विना माधवेति ॥ ५९ ॥

प्रह्लाद इति । तं तथा जगत्त्रयं हरन्तं भगवन्तं प्रह्लादो निस्तन्द्रं तन्द्रया विना अस्तौत् (कृ ? स्तु)तवान् । व्यक्ताव्यक्तधाम्ने सर्वजीवात्मतया व्यक्तधाम्ने परमात्मतया त्वऽव्यक्तधाम्ने ते नमः । पुंसां बन्धच्छित्तौ संसारबन्धविमोचने बन्धक्लृप्तौ संसारबन्धकल्पने च त्वां विना भवन्तं वर्जयित्वा हे माधव! कोऽन्य ईष्टे शक्तो भवति । क ईश्वरो भवति । इत्येवमस्तौदिति सम्बन्धः ॥ ५९ ॥

अथ बलिमखिलेशो बन्धनान्मोचयित्वा
पदमदित मनोज्ञं पावनं क्वापि तस्मै ।
तपन इव स पूर्वं तापयन् जीवलोकं
शिशिरयति हि पश्चात् कारुणीवारिपूरैः ॥ ६० ॥

अथेति । अथानन्तरमखिलेशो भुवनपतिर्भगवान् बलिं बन्धनान्मोचयित्वा वीतबन्धं कृत्वा तस्मै बलये क्वापि प्रदेशे मनोज्ञं सर्वसम्पत्समृद्धतया मनोहरं पावनं दुर्जनसंसर्गाभावाद् विशुद्धं पदं स्थानमदित दत्तवान् । तत्रार्थान्तरन्यासमाह— स भगवान् महाविष्णुस्तपन इव सूर्य इव जीवलोकं सर्वशरीरिवर्गं पूर्वं तापयन् प्रतप्तं कुर्वन् पश्चाद् भूयः कारुणी कारुण्यं तद्रूपैर्वारिपूरैः शिशिरयति शान्ततापं करोति । तदुक्तम् —

'सूर्यस्याग्निमया अर्धे रश्मयोऽर्धे पयोमयाः'

इति ॥ ६० ॥

उपसंहरति —

महाबलिमहासुरात्त्रिभुवनं त्रिभिर्विक्रमैः
क्रमेण समुपाहरन्नदितिमोदमापादयन् ।
सरोजभवनादिभिः सततसेवितो दैवतैः
करोतु भवतां मुदं कपटवामनः पावनः ॥ ६१ ॥

महाबलीति । त्रिभिर्विक्रमैः पदविन्यासैः महाबलिमहासुरात्त्रिभुवनं भुवनत्रयं भूम्यन्तरिक्षस्वर्गरूपं क्रमेण प्रथमं भूमिं ततोऽन्तरिक्षं ततः स्वर्गमिति परिपाट्या समुपाहरन् स्वीकुर्वन् अदितेर्मोदमापादयन् इन्द्राय स्वर्गलोकं दत्त्वा तज्जननीं प्रीणयन्नित्यर्थः । सरोजभवनादिभिः ब्रह्मप्रधानैः दैवतैर्देवसमूहैः सततसेवितोऽनवरतमासेव्यमानः पावनः स्वभक्तान् दुरितप्रशमनेन विशुद्धान् कुर्वन् कपटवामनो भगवान् वटुवामनस्वरूपी भवतां मुदं प्रीतिं करोतु । वामनावतारकथानुस्मरणपावनान् वः प्रीणयतु भगवानिन्द्रानुज इति सिद्धं मङ्गलम् ॥ ९१ ॥

इति विष्णुविकासव्याख्यायां

पञ्चमः सर्गः ।

## षष्ठः सर्गः ।

---

जातुचिद् भृगुकुले जनार्दनो
जायते स्म जमदग्निनन्दनः ।
रेणुकाजठरशुक्तिमौक्तिकं
रामनामकमुदाहरन्ति यम् ॥ १ ॥

जातुचिदिति । जातुचित् कदाचित् जनार्दनो भगवान् महाविष्णुः भृगूणां कुले जमदग्निनन्दनः सन् जायते स्म सम्बभूव । रेणुका नाम तज्जननी । तस्या जठररूपायां शुक्तौ मौक्तिकं मुक्तामणिरेव । तज्जठरादुत्पन्न इत्यर्थः । तथाभूतं यं जनार्दनं रामनामकं रामसंज्ञकमुदाहरन्ति । महान्त इति शेषः ॥ १ ॥

क्षत्रियैरशुभकर्मकर्मठै-
रन्धकारनिकरैरिवोद्धतैः ।
वर्जितां वसुमतीं विधास्यतो
यस्य भास्वत इवोदयोऽर्थवान् ॥ २ ॥

क्षत्रियैरिति । यस्य रामस्य उदय उद्भवः भास्वतः सूर्यस्योदय इवार्थवान् सप्रयोजनो भवति । कीदृशस्य । अशुभकर्मसु अधर्मव्यापारेषु कर्मठैः कर्मशीलैः तत्परैरित्यर्थः । अन्धकारनिकरैरिव तमस्समूहैरिवोद्धतैरुज्जृम्भितैः क्षत्रियैः कार्तवीर्यादिभिर्नृपैर्वर्जितां विरहितां वसुमतीं वसुन्धरां विधास्यतो विधातुं प्रवृत्तस्य । तथाविधानप्रक्रमेणास्योदयस्यार्थवत्त्वं; रवेस्त्वन्धकारवर्जनेन ॥ २ ॥

विक्रमेण भुजशालिनोऽखिलां-
स्तापसांश्च तपसा जिगाय यः ।
अग्रजैः सह समग्रसम्मदः
शर्मदो गुरुजनस्य सोऽभवत् ॥ ३ ॥

विक्रमेणेति । यो रामो विक्रमेण दोष्प्रतापेनाखिलान् भुजशालिनो भुजप्रतापशालिनो जिगायाभिभूतवान् । तपसा तापसांश्च जिगाय । स

---

1. 'त्रिवेदैः' इति पाठान्तरम् ।

तथाभूतो रामोऽग्रजैः सह समग्रसम्भवः सम्पूर्णप्रमोदो गुरुजनस्य मातापित्रोः शर्मदः सुखप्रदोऽभवदभूत् ॥ ३ ॥

अन्यसक्तहृदयां प्रकुप्यतः
शासनात्स पितुरात्ममातरम् ।
सन्निहत्य मुदितात् पुनस्ततो
मातृजीवितमवीवरद्वरम् ॥ ४ ॥

अन्येति । अन्यस्मिन् पुरुषे सक्तहृदयामनुरागवतीं मातरं प्रकुप्यतः पितुः शासनाद्धेतोः सन्निहत्य पुनर्मुदितात् प्रशान्तकोपतया सन्तुष्टाचतस्तस्मात् पितुः सकाशान्मातुर्जीवितं जीवनमेव वरमवीवरद् वृतवान् ॥ ४ ॥

तातमातृहितकाम्यया दिवः
कामधेनुमपहृत्य कामपि ।
आश्रमं निजमपश्रमार्जित-
स्फीतसम्पदमथ व्यधत्त सः ॥ ५ ॥

तातेति । अथ मातृजीवनानन्तरं (तातमात्रोः) हितकाम्यया इष्टवाञ्छया दिवः । स्वर्गात् कामधेनुं सुरभितनयामपहृत्याहृत्य । कामपीत्यनिर्देश्य-प्रभावामित्यर्थः । निजमाश्रममपश्रममक्लेशं यथा तथार्जिताः संपादिताः स्फीताः संपदः सकलसमृद्धयो यस्मिंस्तथा स व्यधत्त विहितवान् ॥ ५ ॥

स प्रणम्य पितरौ ततो व्रज-
न्नाश्रमं भृगुमुनेरुपासदत् ।
आज्ञया पुनरमुष्य हृष्यतः
शङ्करार्चनविधावुदास्थितः ॥ ६ ॥

स इति । स रामः पितरौ रेणुकाजमदग्नी प्रणम्य ततस्तदाश्रमाद् व्रजन् गच्छन् भृगुमुनेः स्वपितामहस्याश्रममुपासदद् उपगतवान् । पुनस्तदनन्तरममुष्य भृगुमुनेराज्ञया । कीदृशस्य । हृष्यतः सन्तुष्टस्य पौत्र इति प्रीतिमतोऽमुष्य शासनात् शङ्करार्चनविधौ परमेश्वरस्य परिचर्याविधाने विषये उदस्थित उद्युक्तवान् ॥ ६ ॥

दीर्घपातिसुरदीर्घिकापयः-
शीतपूतमचलेशितुस्तटम् ।

सम्प्रपद्य निरवद्यधीस्तप-
स्तप्यते स्म जमदग्निनन्दनः ॥ ७ ॥

दीर्घेति । अचलेशितुर्हिमवतो दीर्घपातिन्या दूरादापतन्त्याः सुरदीर्घि-
काया गङ्गायाः पयसा शीतं शीतलं पूतं पवित्रं च तटं सानुप्रदेशं संप्रपद्य
निरवद्यधीर्निर्दोषमना जमदग्निनन्दनस्तपस्तप्यते स्म ॥ ७ ॥

आशयोपकलितस्य शूलिनो
मौलिचन्द्रगलितैः सुधारसैः ।
तर्पितोदरतयेव न व्य-
मन्वभूदनशनेन भार्गवः ॥ ८ ॥

आशयेति । भार्गवोऽनशनेनाशनाभवाद् व्यथां क्षुद्बाधादुःखं नान्व-
भूत् नानुभूतवान् । अत्रोत्प्रेक्षते — आशये हृदये उपकलितस्य समाधिभाव-
नया सन्निधापितस्य शूलिनः श्रीपरमेश्वरस्य मौलिचन्द्रात् शिरश्चन्द्रकलायाः
सकाशाद् गलितैर्निस्सृतैः सुधारसैरमृतद्रवैस्तर्पितोदरतया इव सम्पूर्णोदरत्वादि-
वेति ॥ ८ ॥

वातवर्षतुहिनातपानपि
स्थैर्यवारिधिरसावसासहीत् ।
श्वापदा अपि यदाश्रयाज्जहु-
र्द्वन्द्वबाधमथवा स किं पुनः ॥ ९ ॥

वातेति । स भार्गवः स्थैर्यवारिधिः स्थिरतासमुद्रः स्थिरतरधीरि-
त्यर्थः । वातं वर्षं तुहिनं (आतपं च) असासहीत् पुनः पुनः भृशं सोढवान् ।
वर्षातपादिद्वन्द्वस(हि)तोऽभूदित्यर्थः । यदाश्रयाद्यस्य भार्गवस्याश्रयादवलम्बना-
द्धेतोः श्वापदा अपि गजसिंहवराहशार्दूलादिवनसत्त्वा अपि द्वन्द्वबाधं शाश्वत-
कलहं जहुस्त्यक्तवन्तः । किं पुनर्विशेषज्ञः स भार्गवः । अथवेत्यनेनेदं
पक्षान्तरमुपन्यस्तम् ॥ ९ ॥

अग्निपञ्चकमुदञ्चदुष्मकै-
रत्यशेरत शरीरनिस्सृताः ।

तस्य तावदरुमूष्मलास्तप-
स्तेजसां विततयस्तपोनिधेः ॥ १० ॥

अग्नीति । तावत्तदवसरे तस्य भार्गवस्य तपोनिधेररूमूष्मला अत्यर्थ-मूष्मवत्यस्तपस्तेजसां विततयो विस्ताराः शरीरान्निस्सृता निर्गतास्सत्यः उच्चकैरुद-ञ्चदुज्ज्वलदप्यग्निपञ्चकं पञ्चाग्निमित्यग्नेरतातिशयितवत्यः ॥ १० ॥

तादृशेन तापसा तपत्विषा
तापितेषु भुवनेषु तापसैः ।
निर्जरैश्च वरदानमर्थितो
धूर्जटिस्तदिदमभ्युपागमत् ॥ ११ ॥

तादृशेनेति । तथाप्रवृद्धेन तपस्य ग्रीष्मकालस्येव त्विट् यस्य तथाभूतेन तस्य तपसा भुवनेषु लोकत्रये तापितेषु सन्तापं प्रापितेषु सत्सु तापसैर्नारदपर्वता-दिभिः ऋषिभिः निर्जरैर्देवैश्च वरदानमस्मै वरवितरणमर्थितो याचितो धूर्जटिः शम्भुस्तादिदं वरदानम् अभ्युपागमत् तथेत्यङ्गीकृतवान् । 'अङ्गीकारोऽभ्युपगमः प्रतिश्रवसमाश्रयः' इत्यमरः ॥ ११ ॥

उद्यतः स जमदग्निन(न्द ? न्दि)नो
भावबन्धदृढतां परीक्षितुम् ।
बिभ्रदद्भुतकिरातविग्रहं
क्षिप्रमद्रिशिखरादवातरत् ॥ १२ ॥

उद्यत इति । स भगवान् धूर्जटिर्जमदग्नि(नन्दि)नो जामदग्न्यस्य भावबन्धदृढतां स्थैर्यं परीक्षितुं ज्ञातुमुद्यत उद्युक्तः सन् अद्भुतमाश्चर्यकरं किरातविग्रहं बिभ्रद्धारयन्नद्रिशिखरात कैलासशृङ्गात् क्षिप्रमिवावातरदवतीर्ण-वान् ॥ १२ ॥

तूणसम्भृतशरः शरासवान्
स्थूलदीर्घभुजदण्डदारुणः ।
केकिपिञ्छपरिणद्धकुन्तलः
शिग्रसुप्रभमुखो विरूर्बभौ ॥ १३ ॥

तूणेति । तूणे सम्भृतशरः सन्निहितसायकः शरासनवान् धनुष्मान् स्थूलाभ्यां पृथुभ्यां दीर्घाभ्यां च भुजदण्डाभ्यां दारुणो भयङ्करः केकिपिञ्छै-र्मयूरकलापैः परिणद्धकुन्तलः बद्धशिरोरुहः शिप्रैश्चिबुकरोमभिः सुप्रभमुखः सुष्ठुशोभितवदनो विभुः परमेश्वरो बभौ शुशुभे ॥ १३ ॥

मांसभारनमितांसमण्डलः
सत्वरभ्रमणलोलकुण्डलः ।
क्वापि भार्गवमलक्षयन्निव
स्वैरमावसदसौ तरोरधः ॥ १४ ॥

मांसेति । मांसभारेण शवभारेण नमितः किञ्चिन्नतिं गतः अंसमण्डलो स्कन्धभागो यस्य सत्वरेण भ्रमणेन द्रुतसञ्चारेण लोलकुण्डलश्चलिताभरणः असौ भगवान् भार्गवमलक्षयन्निवापश्यन्निव क्वापि तरोरधो वृक्षमूले स्वैरं स्वच्छन्द-मावसदुपविष्टवान् ॥ १४ ॥

अंसतः समवतारितं पलं
भिण्डिपालशिखरेण खण्डयन् ।
कीकसत्वचमतो विमोचय-
न्नल्पकालमिव स व्यजीगमत् ॥ १५ ॥

अंसत इति । स शङ्करशम्बरः अंसतः स्कन्धादवतारितं पलं मांसं भिण्डिपालो नाराचः, खड्गाकारः शरस्तस्य शिखरेण अग्रेण खण्डयन् विदारयन्, (कीकसम्) अस्थि त्वक् चर्म, कीकसत्वचमिति समाहारद्वन्द्वः । 'द्वन्द्वाच्चुदषहान्तात् समाहारे' इति टच् समासान्तः । तयोर्विभागः पृथक्-करणं तत्र तत्पर उद्युक्तः सन्निहिततरुमूले स्वल्पकालं व्यजीगमद् विगमया-मास ॥ १५ ॥

अन्तकारिशबरं तमन्तिके
वीक्ष्य किञ्चिदिव वीरचर्यया ।
लम्भितो विकृतिमेव सूचिवा-
नञ्जसा स खलु रेणुकासुतः ॥ १६ ॥

अन्तकेति । स खलु तपस्यन् रेणुकासुतः तमन्तकारिशबरमन्तिके समीपे वीक्ष्य वीरचर्यया वीरप्रतापेन किञ्चिदिवाल्पं विकृतिं कोपविकारं लम्भितः

भाषितः। अत्रानुकूलो रेणुकाशब्दः। क्षत्रिया हि सा तत्पुत्रत्वात् क्षात्रधर्मस्यासहनत्वस्य किञ्चिदाविर्भाव इति द्रष्टव्यम्। अञ्जसा सहसा अविचार्येत्यर्थः। एवं वक्ष्यमाणप्रकारमूचिवानुक्तवान्॥ १६॥

कस्क एवमशिवेन कर्मणा
मर्मणामसि मम व्यथाकरः।
दूरतोऽपसर दुर्मद! त्वया
नेक्षितः किमु समाधिमानहम्॥ १७॥

कस्क इति। कस्कः त्वम्। 'कस्कादिषु च' इति सत्वम्। एवमशिवेन मांसकर्तनरूपेणाशुभेन व्यापारेण मम मर्मणां व्यथाकरोऽसि। जन्तुकर्तनं मम मर्मकर्तनमिव मां दुःखयतीत्यर्थः। हे दुर्मद! अविनीत, दूरतोऽपसर मदन्तिकं परिहृत्य दूरं गच्छ। समाधिमान् तपश्चरन्नहं त्वया किमु नेक्षितः कस्मान्नावलोकितः॥ १७॥

नीचतां तव हि सूचयत्यदः
केवलं न मृगमांसकर्तनम्।
किं त्वसावपि विशेषतस्तरां
साध्वसाधुजनबोधवैधुरी॥ १८॥

नीचतामिति। तव नीचतां नीचजातिसम्भवमद एतन्मांसकर्तनं केवलमेव न सूचयति। कथं तर्हि। किन्त्वसौ अपि साध्वसाधुजनबोधे सज्जनासज्जनविशेषज्ञाने वैधुरी विधुरत्वमसमर्थत्वं विशेषतस्तरामधिकतरं तव नीचतां सूचयति। अतः शकजातीयस्त्वं दूरगमनयोग्य इत्यभिप्रायः॥ १७॥

यादृशः पशुवदत्ति हत्ति च
प्रायशः स्वपिति च व्यवैति च।
तादृशोऽयमथवा कथं भवा-
नीदृशां स्थितिमवैतु मादृशाम्॥ १९॥

यादृश इति। अथवा यादृशो मूढजनः पशुरिवात्ति भक्षयति हत्ति पुरीषमुत्सृजति च। प्रायशः स्वपिति निद्राति च व्यवैति च निधुवनं करोति च। केवलमाहारनिद्रामैथुनमात्रपरा इत्यर्थः। हत्तीति 'हद पुरीषोत्सर्गे' इति यद्यपि भौवादिक आत्मनेपदी तथापि 'बहुलमेतन्निदर्शनम्' इति सर्वव्यभिचारपरतया

विकरणव्यभिचारेणादादिकत्वं परस्मैपदित्वं चास्य धातोरुपपद्यत इति बोध्यम् । तादृशो भवानबोधनिधिरीदृशां महतां मादृशां स्थितिं मर्यादां समाचारं शुद्धिमित्यर्थः । कथमवैतु केन प्रकारेण जानातु ॥ १९ ॥

सप्रहासमवदन्महेश्वरो
युक्तमालपसि रेणुकासुत ।
त्वादृशां स्थितिरतीव दुर्गमा
सर्वदेहिसमयातिवर्तिनी ॥ २० ॥

सप्रहासमिति । महेश्वरः सप्रहासं प्रहासं कुर्वन्नवददभिहितवान् । हे रेणुकासुत क्षत्रियपुत्र, युक्तमालपसि । मादृशां स्थितिं कथं भवानवैत्विति यदुक्तं त्वदुपपन्नमेव । त्वादृशां स्थितिः समाचारोऽतीवातितरां दुर्गमा दुर्विज्ञेया । सर्वेषां देहिनां शरीरिणां यः समयो मर्यादा इदं कार्यमिदमकार्यमिति यो नियमस्तमतिवर्तितुं अतिक्रमितुं शीलमस्या इति तथाभूता खलु त्वादृशां स्थितिः । तत् कथं ज्ञातुं शक्यत इति भावः ॥ २० ॥

नीचता मम हि मांसकर्तना-
दन्वमायि भवता यथाधुना ।
उच्चतातिमहती तथा मया-
प्यन्वमायि तव मातृकर्तनात् ॥ २१ ॥

नीचतेति । अधुनेदानीं मम हि मांसकर्तनात् मांसखण्डनाद्धेतो-र्यथा येन प्रकारेण ( ... ... ... ... ) तव मातृकर्तनात् मातुः कण्ठच्छेदाद्धेतोरतिमहती तव उच्चता उत्कृष्टजातित्वं मयाप्यन्वमायि अनुमिता । उत्कृष्टजातेरेव मातृवधौचित्यमिति परिहासोपन्यासः ॥ २१ ॥

सम्पदन्यजनदुर्लभा परं
शैलजेयमनुभूयते मया ।
प्राणिसंहरणनिर्घृणो जनै-
रुग्र इत्यहमसावुदाहृये ॥ २२ ॥

सम्पदु इति । मद्वृत्तं पारमार्थ्यं शृण्वित्याह । अन्यजनैर्मद्व्यतिरिक्तैः जनैर्दुर्लभा लब्धुमशक्या इयं शैलजा शैलजाता सम्पत् मृगमांसादिसमृद्धिर्मया परमनुभूयते केवलं मयैव नान्येन । असावहं प्राणिसंहरणे जीवजन्तुवधे निर्घृणो

निर्दयः। अतोऽहं जनैः सर्वजनैरुग्र इत्युदाह्रिये क्रूर इत्युदाहृतो भवामि। इति शबरस्वभावोक्त्या शैलजापतिः संहाररुद्रश्चाहमिति ध्वन्यते ॥ २२ ॥

**क्व प्रयास्यति गिरीश एष भो**
**यस्य वेश्म हि मही महत्यसौ।**
**सन्निधिर्मम न सह्यते यदि**
**द्रागितोऽपसर तर्हि तापस! ॥ २३ ॥**

क्वेति। त्वया दूरतोऽपसर दुर्मदेति यदुक्तोऽसि तत्र ब्रवीमि। भोस्तापस! एष गिरीशः पर्वताधिपतिः क्व प्रयास्यति इतः कुत्र गमिष्यति। महती विस्तीर्णासौ मही पर्वतवनभूमिः यस्य मम वेश्म भवनम्। स्वभवनमुज्झित्वा क्व गन्तव्यम्। मम सन्निधिः सामीप्यं न सह्यते यदि तव दुस्सहश्चेत्तर्हि द्राक् क्षिप्रमितोऽस्मात् प्रदेशादपसर गच्छ। आगन्तुको हि त्वम्। तदितोऽन्यत्र गमनमनुचितं न भवतीति भावः ॥ २३ ॥

**इत्यमूनि वचनानि धूर्जटेः**
**शृण्वताथ जमदग्निसूनुना।**
**शङ्करः शबरवेष एष इ-**
**त्यात्मनैव निरणायि धीमता ॥ २४ ॥**

इतीति। इत्येवंप्रकाराण्यमूनि धूर्जटेर्भगवतो वचनानि शृण्वता जमदग्निसूनुना रामेण शबरवेषः शङ्कर एव एष इत्यात्मनैव स्वबुद्ध्यैव निरणायि निश्चितम्। अत्र हेतुः धीमता बुद्धिमतेति। शैलजेयमित्यादिभगवद्वाक्यध्वनितार्थतत्त्वावगमो निश्चयः ॥ २४ ॥

**तं प्रपद्य कलितप्रदक्षिणो**
**दण्डवत् प्रणतवानुवाच च।**
**यन्मयोदितमतत्त्ववेदिना**
**क्षम्यतां तदिदमम्बिकापते! ॥ २५ ॥**

तमिति। सं जमदग्निसूनुस्तं भगवन्तं प्रपद्य प्राप्य कलितप्रदक्षिणो दण्डवत् प्रणतवान् दण्ड इव दीर्घनमस्कारं कृतवानुवाच च। किमिति। हे

अम्बिकापते! अतत्त्ववेदिना तत्त्वं परमार्थमजानता मया यदुदितं सावक्षोभमभि-
हितं तदिदं क्षम्यतां सह्यतामिति प्रार्थनायां लोट् ॥ २५ ॥

**यद्युदैष्यदिह मे विवेकिता**
**तन्मया खलु भवानवेत्स्यत।**
**ऊष्मणा हि महताधिगम्यते**
**भस्मना निचुलितोऽपि पावकः ॥ २६ ॥**

**यदीति।** इहास्मिन्नवसरे मे विवेकिता विवेकशालित्वम् उदैष्यद् उदितम्
उद्भूतं यदि तत् तस्माद् मया भवानवेत्स्यत खलु विदितो भविष्यत्येव।
ममेदानीं विवेकाभावादेव भवानविदितोऽभविष्यदित्यर्थः। विवेकिना तु सुवेद्य
एव भवानित्याह दृष्टान्तमुखेन। पावकोऽग्निः भस्मना निचुलितोऽप्याच्छादि-
तोऽपि महतोष्मणा उष्णत्वेन हेतुनावगम्यते ज्ञायते। हि यस्माद्। यथा ताव-
दद्दृष्टस्वरूपोऽग्निरूष्मणावगम्यते तथा भवानपि शबरवेषतिरोहितस्वरूपोऽप्यसा-
धारणेन तेजसावगन्तुं शक्य एवेत्यभिप्रायः ॥ २६ ॥

**मुग्धचन्द्रमकुटं मुदां पदं**
**दुग्धपाण्डुवपुषं दुरासदम्।**
**सर्पहारकटकं सनातनं**
**भक्तबान्धव! भवन्तमाश्रये ॥ २७ ॥**

**मुग्धेति।** हे भक्तबान्धव भक्तानां बन्धो! भवन्तमहमाश्रये सर्वात्मना
भजामि। कीदृशम्। मुग्धचन्द्रमकुटं बालशशिशेखरं मुदां पदं प्रीतिस्थानं
दुग्धमिव पाण्डुवपुषं धवलशरीरं दुरासदम् अपुण्यजनैरप्राप्यं सर्पहारकटकं सर्प-
रूपाणि हारकटकाद्याभरणानि यस्य। सनातनं शाश्वतं तादृशमिति सम्बन्धः
॥ २७ ॥

**नित्यमुक्तममलं निरामयं**
**निष्कलं निरुपमं निरत्ययम्।**
**निष्कलङ्कचरितं निरीश्वरं**
**नीललोहित! भवन्तमाश्रये ॥ २८ ॥**

निस्येति । नित्यमुक्तं नियमेन प्रकृतितो भिन्नम् अत एवामलं निर्मलं निरामयं निर्दोषं निष्कलमस्वरूपं निरुपममुपमारहितं निरत्ययं निरवसानं निष्कलङ्कचरितम् अमलचरित्रं निरीश्वरम् ईश्वरो यस्य नास्तीति तथाभूतम् । हे नीललोहित ! भवन्तमाश्रये ॥ २८ ॥

पुण्यपूरसुलभं पुरद्विषं
पार्वतीप्रियतमं द्युतेः पदम् ।
सर्वबोधसरसं सदाशिवं
सन्ततं भव ! भवन्तमाश्रये ॥ २९ ॥

पुण्येति । पुण्यपूरेण सुकृतसञ्चयेन सुलभं सुखप्राप्यं पुरद्विषं त्रिपुरशत्रुं पार्वतीप्रियतमं द्युतेः तेजसः पदं स्थानं सर्वबोधसरसं सर्वज्ञत्वात्सरसं सदा प्रसन्नं सदाशिवं हे भव ! सन्ततं सर्वदा भवन्तमाश्रये ॥ २९ ॥

इत्थमादि नुवते प्रसेदिवान्
भार्गवाय भगवान् महेश्वरः ।
दत्तवान् परशुमात्मनस्ततो
विश्रुतः परशुराम इत्यसौ ॥ ३० ॥

इत्थमिति । इत्थमादि नुवते स्तुवते भार्गवाय प्रसेदिवान् प्रसन्नो भगवान् महेश्वरः आत्मनः परशुं निजमेव परशुं दत्तवान् अर्पितवान् । ततस्तस्माद्धेतोरसौ भार्गवः परशुराम इति विश्रुतः प्रसिद्धोऽभूत् । ततः प्रभृतीति वा ॥ ३० ॥

निर्जरद्रुहमनेन सत्वरं
दैत्यवर्गमवदारयाखिलम् ।
अस्तु वत्स ! तव भद्रमित्यमुं
सम्प्रभाष्य स हरस्तिरोदधे ॥ ३१ ॥

निर्जरेति । स तादृशः शबरवेषो हरः । हे वत्स त्वमनेन परशुना निर्जरद्रुहं देवद्वेषिणमखिलं दैत्यानां वर्गं समूहं सत्वरं शीघ्रं अवदारय खण्डय । तव भद्रमस्तु मङ्गलमस्तु । इत्यमुं परशुरामं सम्प्रभाष्य सम्यगुक्त्वा तिरोदधे तिरोबभूव ॥ ३१ ॥

भार्गवोऽपि भवशासनाद् द्रुतं
दानवौघशलभानशेषतः ।
उज्ज्वलोत्कटकुठारपावक-
ज्वालयालघुमदानदाहयत् ॥ ३२ ॥

**भार्गव** इति । भार्गवोऽपि भवस्य भगवतः शासनाद्धेतोर्दानवौघमेव शलभानशेषतः सर्वानपि उज्ज्वलया प्रदीप्तया उत्कटया कुठारया कुठार-रूपया पावकज्वालया अलघुमदान् गुरुतरगर्वानमून् द्रुतमदाहयद् भस्मीकारितवान् ॥ ३२ ॥

शङ्करोऽथ मुदितः समस्ततः
शस्त्रशास्त्रममुमध्यजीगपत् ।
बाहुविक्रमभरेण भूयसा
बाहुलेयसदृशः स चाभवत् ॥ ३३ ॥

**शङ्कर** इति । अथानन्तरं मुदितो दैत्यनिधनेन सन्तुष्टः शङ्करोऽमुं भार्गवं समस्ततः सर्वमपि शस्त्रशास्त्रं धनुर्वेदमध्यजीगपद् अध्यापितवान् । स च भार्गवो भूयसा महता बाहुविक्रमभरेण भुजवीर्यप्रकर्षेण बाहुलेयसदृशः स्कन्द-तुल्योऽभवत् ॥ ३३ ॥

स प्रपद्य शितिकण्ठशिष्यता-
मप्रमेयमहिमा महामुनिः ।
अत्यशेत महसा सुरासुरा-
नाश्रयाश्रयिसदृक्षतेदृशी ॥ ३४ ॥

**स** इति । स महामुनिर्भार्गवः शितिकण्ठस्य शम्भोः शिष्यतां प्राप्य लब्ध्वा अप्रमेयमहिमा अपरिच्छेद्यप्रभावः सन् महसा निजतेजसा सुरानसुरांश्चात्यशेतातिशयितवान् । आश्रयस्याश्रयिणश्च सदृक्षता सादृश्यं ईदृशी एवं-प्रकारा । आश्रयतुल्यो भवत्याश्रयीति यदुच्यते तदत्र प्रत्यक्षमभूदित्यर्थः ॥३४॥

स व्रजन्नभिबुभूषतो मुखाद्
द्वीपिनः सपदि रक्षितं द्विजम् ।

**वेदशास्त्रजलराशिपारगं**
**मित्रधेयमकृताकृतव्रणम् ॥ ३५ ॥**

**स** इति । स भार्गवो व्रजन् भगवत्समीपादाश्रमं प्रतिगच्छन्नभिबुभूषतोऽभिभवितुमिच्छतो द्वीपिनो व्याघ्रस्य मुखात्सपदि रक्षितं तेन परित्रातम् । कुठारेण शार्दूलं हत्वा रक्षितम् । वेदशास्त्ररूपस्य जलराशेः पारगं पारदृश्वानमकृतव्रणं नाम द्विजं ब्राह्मणं मित्रधेयमकृत सुहृदं चकार ॥ ३५ ॥

**तेन साकमुचितेन बन्धुना**
**प्रस्थितः स मरुतेव पावकः ।**
**आश्रमं निजमवाप्य सादरं**
**वन्दते स्म पितरौ महाद्युतिः ॥ ३६ ॥**

**तेनेति** । उचितेन योग्येन बन्धुना तेनाकृतव्रणेन समम् । मरुता वायुना पावक इव इत्यनेन सदा साहचर्यं दर्शितम् । प्रस्थितः स महाद्युतिरुत्कृष्टतेजा भार्गवो निजमाश्रममवाप्य सादरमादरातिशयेन पितरौ रेणुकाजमदग्नी वन्दते स्म अभिवन्दयामास ॥ ३६ ॥

**हेहयक्षितिपतिस्तदन्तरे**
**वीर्यवान् स कृतवीर्यनन्दनः ।**
**मन्त्रिभिः सह मृगव्ययोत्सुकः**
**प्राविशद्वनमनूनसैनिकः ॥ ३७ ॥**

**हेहयेति** । तदन्तरे तस्मिन्नवसरे हेहयक्षितिपतिर्वीर्यवान् पराक्रमी स तथा प्रसिद्धः कृतवीर्यनन्दनः कार्तवीर्यार्जुनः मृगव्ययोत्सुकः मृगयायां सश्रद्धः । 'प्रसितोत्सुकाभ्याम्–' इति सप्तम्यास्तृतीया । मन्त्रिभिः सहानूनसैनिको बहुसैन्यसमेतो वनं प्राविशत् प्रविष्टवान् ॥ ३७ ॥

**दोःसहस्रपृथुशाखिमण्डलः**
**सत्त्ववानचलतुङ्गविग्रहः ।**
**भूषणद्युतिशतेन पुष्पितः**
**काननान्त इव जङ्गमो बभौ ॥ ३८ ॥**

**दोरि**ति । स कृतवीर्यनन्दनः जङ्गमः सञ्चारवान् काननान्त इव बभौ शोभते स्म । कीदृशः । दोःसहस्रमेव पृथु स्थूलं शाखिमण्डलं वृक्षसमूहो यस्य । सत्त्ववान्, सत्त्वं बलं तदेव वा सत्त्वा वनजन्तवः तद्वान् । अचल इव तुङ्ग-विग्रहः उन्नतशरीरः । भूषणानां द्युतिशतेन दीप्तिपुञ्जेन पुष्पितः सञ्जात-पुष्पः ॥ ३८ ॥

**खड्गवृन्दमथ खड्गमण्डलैः**
**शल्ययूथमथ शल्यकोटिभिः ।**
**अच्छभल्लमपि भल्लराशिभिः**
**पत्रिणश्च स जघान पत्रिभिः ॥ ३९ ॥**

**खड्गे**ति । स नृपः अथ अनन्तरं खड्गानां मृगविशेषाणां वृन्दं खड्गमण्डलैरसिजालैर्जघान हतवान् । शल्यानां वराहविशेषाणाम् .......... ॥ ३९ ॥

**सिंहजालमथ संहरन् शरैः**
**कृन्तति स्म बहु दन्तिनां कुलम् ।**
**निर्लुलाव च लुलायमण्डलं**
**सञ्चचार गवयान् गवेषयन् ॥ ४० ॥**

............मण्डलं निर्लुलाव निर्लूनवान् । मृगविशेषान् गवेषयन् मार्गयन् सञ्चचार सर्वत्र सञ्चारं कृतवान् ॥ ४० ॥

**क्रूरसूरकरदूरतापितो**
**भूपतिर्बहुभिरन्वितो बलैः ।**
**क्षुत्तृडातुरतया स सत्वरं**
**भार्गवाश्रममशिश्रियत् तदा ॥ ४१ ॥**

**क्रूरे**ति । क्रूरैः सूरकरैर्दिवाकररश्मिभिः दूरमत्यर्थं तापितः सन्तापित-शरीरः भूपतिः अर्जुनो बहुभिरसङ्ख्यैर्बलैः सैन्यैरन्वितः सहितः क्षुधा बुभु-क्षया तृषा पिपासया चातुरो दीनस्तस्य भावस्तत्ता तया हेतुना तस्मिन् समये सत्वरं भार्गवस्याश्रममशिश्रियदाश्रितवान् ॥ ४१ ॥

**स्वर्गवीं द्रुतमधोगथो मुनि-**
**र्भोज्यपेयचयमाशितम्भवम् ।**
**येन सैनिकसहस्रकोटिभिः**
**सौहितीं भृशमवापदर्जुनः ॥ ४२ ॥**

**स्वरिति** । अथो तदागमनानन्तरं मुनिर्जमदग्निर्द्रुतं स्वर्गवीं सुरभितनयाम् । आशितं यावत्तृप्ति भक्षितं भवत्यनेनेत्याशितम्भवं भोज्यानां पेयानां चयम् अधोग् दोहनं कृतवान् । 'दुहियाचिरुधि—' इत्यादिना द्विकर्मकत्वम् । अधोगिति दुह प्रपूरणे' इत्यस्माल्लङि रूपम् । येन दुग्धेन वस्तुजातेनार्जुनः सैनिकसहस्रकोटिभिः सह भृशमत्यर्थं सौहितीं तृप्तिमवापत् प्राप्तवान् ॥ ४२ ॥

**स प्रशस्य जमदग्निमुच्चकै-**
**र्विस्मितो निजपुरीमुपागतः ।**
**मन्त्रिणा कुमतिनाथ लम्भित-**
**स्तादृशीं सुरगवीं प्रति स्पृहाम् ॥ ४३ ॥**

**स** इति । सोऽर्जुन उच्चकैर्विस्मितो विस्मितिं प्राप्तो जमदग्निं प्रशस्य श्लाघयन् साधु साध्विति प्रशंसन् निजपुरीं माहिष्मतीपुरमुपागतः प्राप्तः । अथानन्तरं कुमतिना दुर्बुद्धिना केनचिन्मन्त्रिणा सचिवाधमेन तादृशीं तथाप्रभावां सुरगवीं प्रति स्पृहामिच्छां लम्भितः प्रापितः । तां स्वीकर्तुमाशामुत्पादित इत्यर्थः ॥ ४३ ॥

**निर्मलं मुकुरमास्यमारुत-**
**स्तीरपांसुनिकरो जलाशयम् ।**
**किञ्च लाञ्छनमृगः सुधाकरं**
**भूपतिं कुसचिवश्च दूषयेत् ॥ ४४ ॥**

**निर्मलमिति** । निर्मलं स्वच्छं मुकुरं दर्पणमास्यमारुतो मुखवायुः दूषयेद् दुष्टं करोति । इदं सर्वत्रान्वीयते । जलाशयं तटाकादिकं तीरपांसुनिकरस्तत्तटतलभूरेणुकपटलम् । अपि च सुधाकरं चन्द्रं लाञ्छनमृगः कलङ्कमृगः ।

भूपतिं कुसचिवो दुष्टामात्यश्च दूषयेदित्येवम् ॥ ४४ ॥

क्रष्यतेव मुनिरेत्य याचितो
धेनुमप्रवितरंस्तु हिंसितः ।
निघ्नतीं निजबलानि तेन ता-
मुज्झताथ तदपत्यमाहृतम् ॥ ४५ ॥

............(अ)प्रदिशन् मुनिस्तु हिंसितः । निजबलानि सैन्यान् निघ्नतीं स्वप्रभावेण निधनं कुर्वाणां तां धेनुमुज्झता त्यजता अथानन्तरं तेन राज्ञा तदपत्यं तस्य धेनोरपत्यं वत्स आहृतं बलादपहृतम् ॥ ४५ ॥

तत्क्षणादुशनसा स्वविद्यया
जीवितस्य पितुराज्ञया कृती ।
अर्जुनं तमकृतव्रणान्वितः
प्राप कोपकलुषो भृगोः सुतः ॥ ४६ ॥

तदिति । तत्क्ष( णं ? णात् ) तदानीमेव उशनसा शुक्रमुनिना स्वविद्यया स्वस्य मृतसञ्जीविनीमन्त्रबलेन जीवितस्य प्राप्तजीवस्य पितुर्जमदग्नेराज्ञया नियोगेन हेतुना कृती समर्थो भृगोः सुतः परशुरामः अकृतव्रणेन निजसखेन ब्राह्मणेनान्वितः कोपकलुषः क्रोधक्षुभितहृदयः सन् तमपराधिनमर्जुनं प्राप प्राप्तवान् ॥ ४६ ॥

संस्मृतेन पुरवैरिकिङ्कर-
णाहृते परशुकार्मुके वहन् ।
स्यन्दनं समधिरुह्य रेणुका-
नन्दनोऽरुणदरातिमन्दिरम् ॥ ४७ ॥

संस्मृतेनेति । रेणुकानन्दनः संस्मृतेन मनसि चिन्तितेन पुरवैरिणः शम्भोः किङ्करेण भृत्येन केनचिद् भूतेनाहृते नीते परशुकार्मुके परशुं धनुश्च वहन् धारयन् स्यन्दनं समधिरुह्यारातिमन्दिरं शत्रोरर्जुनस्य मन्दिरं माहिष्मतीं पुरमरुणद् रुद्धवान् ॥ ४७ ॥

अस्ति चेत्तव जिजीविषा नृप!
त्यज्यतां सपदि धेनुवत्सकः ।

**अन्यथा सहबलो विनङ्क्ष्यसी-**
**त्यब्रवीदतिरुषाकृतव्रणः ॥ ४८ ॥**

अस्तीति । हे नृप ! तव जिजीविषा जीवितुमिच्छास्ति चेत् तर्हि सपदि शीघ्रं धेनोः वत्सकः शिशुः त्य[illegible]नानुपेक्ष्यताम् । अस्मभ्यं दीयतामित्यर्थः । अन्यथा तस्य दा[illegible] सहबलो [illegible]स्त्वं विनङ्क्ष्यसि विनष्टो भविष्यसि । इत्येवंप्रकारमकृत[illegible]णोऽ[illegible]रुषाब्रवीद[illegible] ॥ ४८ ॥

**प[illegible]कण्ठमु[illegible]मण्डली-**
**च[illegible]श्च [illegible]शोपणौपधम् ।**
**दोःस[illegible]मवलम्[illegible]मात्मनः**
**[illegible]धार्य स निरास तद्वचः ॥ ४९ ॥**

... ... ... शत्रुजये सहायं सम्प्रधार्य सम्यगवबुध्य । साधु निश्चित्येत्यर्थः । तद्वचस्तस्याकृतव्रणस्य वचनं निरास निरस्तवान् नाङ्गीकृतवान् ॥ ४९ ॥

**दोःशतैरपि धनूंषि पञ्चभिः**
**पञ्चभिश्च विशिखानुदूढवान् ।**
**अभ्यषेणयदमन्ददुन्दुभि-**
**ह्रादपूरितनभाः स भार्गवम् ॥ ५० ॥**

दोरिति । सोऽर्जुनोऽथ त[illegible]श्रवणानन्तरं पञ्चभिः दोःशतैर्बाहुशतैर्धनूंषि विशिखान् शरांश्चोदूढवान् सन् अमन्देनोच्चतरेण दुन्दुभिह्रादन रवेण पूरितनभाः पूरिताशावकाशो भार्गवमभ्यषेणयत् सेनया सहाभियातवान् ॥ ५० ॥

**क्षिप्रधाविरथचक्रविक्रम-**
**क्षुण्णजन्यवसुधासमुत्थितैः ।**
**रेणुभिः सपदि रेणुकासुतं**
**प्रावबार कृतवीर्यनन्दनः ॥ ५१ ॥**

... ... ... ... ... ॥ ५१ ॥

सोऽपि तावदकृतव्रणेरित-
त्वङ्गदुद्भटतुरङ्गशोभिना ।
स्यन्दनेन जमदग्निनन्दन-
स्तं रुरोध विशिखाभिवर्षुकः ॥ ५२ ॥

**सोऽपीति** । स जमदग्निनन्दनोऽपि तावत्तदानीमकृतव्रणेन सारथिने-रितैश्चोदितैस्त्वङ्गद्भिरुत्प्लवद्भिरुद्भटैर्दृप्तैस्तुरङ्गैः शोभितुं शीलवता स्यन्दनेन । गत्वेति शेषः । विशिखाभिवर्षुकः शरवर्षणशीलस्तमर्जुनं रुरोध प्रतिरुद्धवान् ॥५२॥

बाणपक्षपवनापसारित-
स्फीतभूतलपरागमण्डलम् ।
खेचरैः सुखनिरीक्षितं तयो-
रत्यजृम्भत सुदारुणं रणम् ॥ ५३ ॥

**बाणेति** । तयोः रामार्जुनयोः बाणानां पक्षपवनैर्वाजमारुतैरपसारित-मपवाहितम् । दूरनिरस्तमित्यर्थः । स्फीतं प्रवृद्धं भूतलपरागमण्डलं क्षुद्रभूरजो-राशिर्यत्र । अत एव खेचरैः सुखनिरीक्षितं दृष्टं दारुणमतिभयङ्करं रणमत्यजृ-म्भतातिशयेन ववृधे ॥ ५२ ॥

सञ्चकर्त स विकर्तनद्युतिः
सत्वरं परशुना भृगूत्तमः ।
हेहयस्य भुजदण्डमण्डलीं
पादपस्य विटपावलीमिव ॥ ५४ ॥

**सञ्चकर्तेति** । विकर्तनस्य सूर्यस्येव द्युतिः प्रतापो यस्य स भृगूत्तमः सत्वरं हेहयस्यार्जुनस्य भुजदण्डानां मण्डलीं समूहं सञ्चकर्त संछिन्नवान् पादपस्य विटपावलीमिव ॥ ५४ ॥

छिन्नदोषमपि दोषकारिणं
तं मुनिः परशुना तथाकरोत् ।
यत्कृते विबुधयौवतैर्मिथो
मत्सरो वरवृतौ यथाभवत् ॥ ५५ ॥

.... .... .... अहं वरयाम्यहं वरयामीति परस्परानिवारणप्रस्तावकलहोऽभवत् । अमुं निहत्य वीरगम्यं प्रापितवानित्यर्थः ॥ ५५ ॥

**तद्बलं च निखिलं तदात्मजे-**
**ष्वर्धतोऽधिकसहस्रमर्दयन् ।**
**आश्रमं निजमवाप्य विश्रमं**
**प्राप साकमकृतव्रणेन सः ॥ ५६ ॥**

**तदिति** । निखिलं निश्शेषं तस्य बलं सैन्यं तस्यात्मजेषु पुत्रेषु मध्ये अर्धतोऽधिकं सहस्रं चार्दयन् निघ्नन् स परशुरामोऽकृतव्रणेन साकं निजमाश्रमं प्राप्य विश्रमं प्राप विश्रान्तोऽभूत् ॥ ५६ ।

**कृत्तशेषकृतवीर्यजात्मज-**
**व्याहतात्मजनको महामुनिः ।**
**सर्वतोऽपि हि कुठारपावके**
**राजकानि जुहुवाम्बभूव सः ॥ ५७ ॥**

**कृत्तेति** । स महामुनिः भार्गवः कृत्तशेषैः निहतशिष्टैः कृतवीर्यजस्यात्मजैः पुत्रैर्व्याहतो निहत आत्मजनको जमदग्निर्यस्य तादृशः । सर्वतोऽपि राजकानि सर्वक्षत्रियसमूहानपि कुठारपावके परशुरूपे पावके जुहुवाम्बभूव हि हुतवान् ॥ ५७ ॥

**पावनोत्तरहिरण्वतीसरि-**
**द्वीचिसेचितलतामहीरुहि ।**
**सन्ततर्प स समन्तपञ्चके**
**राजरक्तसलिलैर्निजान् पितॄन् ॥ ५८ ॥**

**पावनेति** । स भार्गवः पावनोत्तराया अतिशयविशुद्धाया हिरण्वतीसंज्ञायाः सरितो महानद्या वीचिभिः सेचिता लताश्च महीरुहो वृक्षाश्च यस्मिन् तादृशे । समन्तपञ्चके तन्नाम्नि कुरुक्षेत्रप्रदेशे राज्ञां रक्तसलिलैः शोणिताम्बुभिर्निजानात्मीयान् पितॄन् सन्ततर्प सम्यक् तर्पितवान् ॥ ५८ ॥

त्रिसप्तकृत्वो निखिलां धरित्रीं
निःक्षत्रियामप्रतिमः स कृत्वा ।
अजीवयत्तातमजिह्मचेताः
सम्भाव्यते किन्न महत्तरेषु ॥ ५९ ॥

त्रीति । अप्रतिमः उपमानरहितः सर्वोत्कृष्टत्वात् स भार्गवो निखिलां धरित्रीं सर्वामुर्वीं त्रिसप्तकृत्वः एकविंशावर्ति निःक्षत्रियां क्षत्रियजातिरहितां कृत्वा अजिह्मचेता अकुटिलमना अत्यन्तशुद्धमतिः । सन्तुष्टधीरिति यावत् । तातं जमदग्निमजीवयत् सजीवं कृतवान् । स्वयमेव न शक्यापेक्षया । तदेव समर्थयते—महत्तरेषु महानुभावेषु जनेषु किं न सम्भाव्यते किं न सम्भवतीति विज्ञायते । सर्वं सम्भवत्येवेत्यर्थः ॥ ५९ ॥

महेन्द्रधरणीधरे महितमस्त्रशस्त्रादिकं
निधाय वसुधामदादवनिनिर्जरेभ्यो मुनिः ।
ततश्च विशिखानलग्लपितवारितो वारिधे-
रपाहृत कृपानिधिर्विपुलसम्पदः केरलान् ॥ ६० ॥

महेन्द्रेति । मुनिः भार्गवः महेन्द्रधरणीधरे महेन्द्राद्रौ महितं पूजितमस्त्रशस्त्रादिकम् आयुधजातं निक्षिप्य वसुधामात्मवशीकृतां सर्वामपि धरित्रीम् अवनिनिर्जरेभ्यः काश्यपादिब्राह्मणोत्तमेभ्योऽ[illegible] दत्तवान् । ततश्च तदनन्तरं स कृपानिधिः कारुण्यशाली विशिखानलेन बाणाग्निना ग्लपितवारितो दग्धसलिलाद्वारिधेः पश्चिमाम्भोधेः सकाशाद् विपुलसम्पदो विस्तृतधनधान्यादिसमृद्धीन् केरलानपाहृतापाहृतवान् । अशरणानां केषाञ्चिदवनीसुराणां आवासार्थमिमान् केरलानाहृतवानिति कृपानिधिशब्देन द्योत्यते ॥ ६० ॥

सकलभुवनभारं संहरन्नंहसां यः
सततमपि विनेता धर्मिणां जन्मभाजाम् ।
अयति जनहितानां लम्भकः [illegible]शिष्यः
स खलु परशुरामः श्रे[illegible] [illegible]यतां वः ॥ ६१ ॥

सकलेति। सकलभुवनानां भारं दुष्टक्षत्रियदुर्व्यापारजं दुःखं संहरन् सम्यगपाकुर्वन् धर्मिणां धर्मशालिनां जन्मभाजां देहिनाम् अंहसां दुरितानां सततमपि विनेता प्रशमयिता सन् जयति सर्वस्मादुपरि वर्तते। स तादृशो जनहितानां लम्भकः प्रतिपादकः शम्भुशिष्यः स खलु तथा प्रसिद्धः परशुरामो वो युष्माकं श्रेयसेऽभ्युदयाय श्रेयः प्रवर्धयितुं जायतां सम्भवत्विति कविराशास्त इति समस्तं मङ्गलम् ॥ ६१ ॥

इति विष्णुविलासव्याख्यायां षष्ठः सर्गः ।

अम्बरतटिनीनिलयं कम्बुकशाकलितपाणिकमलयुगम् ।
अम्बुजलोचनमारादम्बरचरवन्दितं वन्दे ॥



## सप्तमः सर्गः ।

वंशे मनोरयोध्यायामासीद् दशरथो नृपः ।
यस्य पुत्रीयतः पुत्रो जज्ञे यज्ञप्रियो हरिः ॥ १ ॥

रावणोष्मपरिक्लिष्टैरर्थितो यः सुपर्वभिः ।
अंशैश्चतुर्भिरूष्मांशोरन्ववायमभूषयत् ॥ २ ॥

ऋश्यशृङ्गतपस्तोयैः संसिक्तस्यापि[1] भूयसः ।
रघूणां पुण्यकल्पद्रोरुत्तमं फलमेव यः ॥ ३ ॥

रामभद्र इति ख्यातो रामणीयकजन्मभूः ।
भरतो लक्ष्मणश्चास्य शत्रुघ्नश्चानुजास्त्रयः ॥ ४ ॥

चतुर्भिरात्मनः सिद्धैर्हेतुभिर्विश्वविश्रुतैः ।
अर्थैरिवात्मजैरेभिः शोभते स्म महीपतिः ॥ ५ ॥

आश्रमं प्रथमं तावदावसन्तः सतां मताः ।
अधीतशास्त्रशस्त्रास्त्राः शनैर्ववृधिरेऽर्भकाः ॥ ६ ॥

आशरैर्विहतं यज्ञमात्मनो रघुसूनुना ।
आपयिष्यन्नयोध्यायामाययौ कुशिकात्मजः ॥ ७ ॥

प्राज्ञोऽपि तेन भूपालः प्रार्थितो रामलक्ष्मणौ ।
चिरं दूरमयाचिष्ट कष्टो हि ममताश्रमः ॥ ८ ॥

वसिष्ठशासनात्तेन दत्तावादाय राघवौ ।
निर्जगाम ततस्तुष्टो विश्वामित्रः स्वमाश्रमम् ॥ ९ ॥

सधनुर्बाणतूणीरौ सशरीराविवाङ्गजौ ।
बाष्पायमाणनेत्रैस्तौ दृष्टौ पौरवधूजनैः ॥ १० ॥

---

1 'अतिभूयसः' इति पाठान्तरम् ।

अधिमार्गमतिक्रान्तौ कौशिकेनोपदिष्टयोः ।
बलातिबलयोर्बालौ बलेनालमतृप्यताम् ॥ ११ ॥

ताटकावनमासाद्य तापसेन्द्रेण चोदितः ।
ताटकां पातयामास रामः क्षेमाय देहिनाम् ॥ १२ ॥

आश्रमं वामनस्यैतावश्रमं समुपागतौ ।
अस्त्राणि जृम्भकादीनि लम्भितौ गाधिसूनुना ॥ १३ ॥

सिद्धाश्रमं समभ्येत्य स्निग्धैर्मुनिभिरादृतौ ।
पावने कौशिकीतीरे चेरतू रामलक्ष्मणौ ॥ १४ ॥

ततः सुबाहुमारीचौ कामक्रोधाविवाशयम् ।
दूषयामासतुर्यज्ञं यूनामिव तपोभृताम् ॥ १५ ॥

विशिखैराशरान् सर्वान् सर्वाशारोधिनोऽपि तान् ।
रामो निहतवानुस्रैरन्धकारानिवांशुमान् ॥ १६ ॥

वायव्यास्त्रेण मारीचो द्रावितस्तेन भूतले ।
कथञ्चिज्जीवितं लेभे राम रामेति सङ्गृणन् ॥ १७ ॥

यज्ञान्तेऽवभृथस्नातो विश्वामित्रः प्रसेदिवान् ।
आशीर्भिरेधयामास बहुधा रामलक्ष्मणौ ॥ १८ ॥

निमन्त्रितो निमीन्द्रेण स्वैरं सीरध्वजेन सः ।
ताभ्यां साकं कुमाराभ्यां विदेहान् प्रस्थितो मुनिः ॥ १९ ॥

जाह्नवीमथ सन्तीर्य गौतमाश्रममीयुषा ।
चोदितस्तेन रामोऽसावहल्यामपुनात् पदा ॥ २० ॥

जनकस्य पुरं प्राप्तो मुनिस्तेन सभाजितः ।
रामेण भञ्जयामास मृत्युञ्जयशरासनम् ॥ २१ ॥

खण्डितोद्दण्डचण्डीशकोदण्डं जनकात्मजा।
स्निग्धापाङ्गच्छलादेनं ववार वरणस्रजा ॥ २२ ॥

ततो भरतशत्रुघ्नमन्त्रिपौरपुरोहितैः ।
सार्धमानायितो राजा जनकेनाजनन्दनः ॥ २३ ॥

रामः सीतामुपायंस्त भरतो माण्डवीं ततः ।
ऊर्मिलाश्रुतकीर्ती ते सौमित्री समुदूहतुः ॥ २४ ॥

अथ पङ्क्तिरथः सार्धं सदारैरात्मजन्मभिः ।
अयोध्यां प्रास्थितात्मीयैरशेषैर्बन्धुमण्डलैः ॥ २५ ॥

अमन्ददुन्दुभिध्वानकरम्भितहरिन्मुखम् ।
सत्वरं गत्वरं सैन्यं रुरोध भृगुनन्दनः ॥ २६ ॥

क्वासौ दाशरथिर्येन (भग्नं) मम गुरोर्धनुः ।
कण्ठमस्य कुठारो मे छेत्स्यतीत्युच्चकैर्वदन् ॥ २७ ॥

ततो वैष्णवमादाय रामभद्रः शरासनम् ।
महश्च महितं धीरस्तोषयामास तं मुनिम् ॥ २८ ॥

प्रसेदुषि गते तस्मिन् प्रहृष्टैरात्मबन्धुभिः ।
प्राप्य पङ्क्तिरथं वीरः प्राणंसीत्तं च मैथिलम् ॥ २९ ॥

द्विगुणीकृतसन्तोषसैन्यसङ्घसमन्वितः ।
प्रीतपौरसमाकीर्णामयोध्यामाप भूपतिः ॥ ३० ॥

राजहंस इवोन्मीलदम्बुजास्यां सरोजिनीम् ।
प्राप्य प्रणयिनीं सीतां ननन्द रघुनन्दनः ॥ ३१ ॥

भरतेऽथ सशत्रुघ्ने याते मातुलमन्दिरम् ।
अभिषेकः समारम्भि रामभद्रस्य भूभुजा ॥ ३२ ॥

भरतोऽस्तु महीपालो रामो व्रजतु काननम् ।
इत्थं वरद्वयार्थिन्या कैकेय्या स न्यषेधि च ॥ ३३ ॥

गुर्वादेशं वहन् रामः सर्वाः सन्त्यज्य सम्पदः ।
सार्धं सौमित्रिसीताभ्यां निर्जगाम निकेतनात् ॥ ३४ ॥

शृङ्गिवेरपुरं प्राप्य जटाचीरधरो वशी ।
गङ्गां गुहोपनीतेन पोतेन प्रततार सः ॥ ३५ ॥

भरद्वाजाश्रमं गत्वा नत्वा तं मुनिपुङ्गवम् ।
तद्गिरा सानुगः सोऽयं चित्रकूटमुपेयिवान् ॥ ३६ ॥

जाह्ववीसलिलस्नायी जानकीलक्ष्मणान्वितः ।
तत्र धात्रीधरोद्देशे तपस्तेपे रघूद्वहः ॥ ३७ ॥

अथ तावदयोध्यायामामनस्येन तापितः ।
अपहाय वपुः स्वर्गमापद् दशरथो नृपः ॥ ३८ ॥

दूतैरानायितो धीमान् भरतः सानुजस्तदा ।
विधाय पितृसंस्कारान् विपिनाय प्रयातवान् ॥ ३९ ॥

मातृभिर्मन्त्रिभिः पौरैरन्वितः स पुरोहितैः ।
चित्रकूटाचलं प्राप्य रामभद्रं प्रणेमिवान् ॥ ४० ॥

तन्मुखात् स समाकर्ण्य पितुः स्वर्गाधिरोहणम् ।
सस्नौ सदारसोदर्यो जाह्ववीसलिले शुभे ॥ ४१ ॥

अम्बु नेत्राम्बुर्मिश्रं पित्रे नैवापमर्पयन् ।
भरतं प्रेषयामास दत्वास्मै पादुके निजे ॥ ४२ ॥

---

१. 'प्रासः' इति पाठान्तरम्.

२. 'सानुजः' इति पाठान्तरम्.

३. 'तेने' इति पाठान्तरम्.

भरतस्तु जटां बिभ्रदभिषिच्यार्यपादुके ।
नन्दिग्रामे वसन् धीरः पालयामास मेदिनीम् ॥ ४३ ॥

चित्रकूटाचलान्निर्यन्नत्रेराश्रममागतः ।
नेमिवाननसूयायाः पतिं तं जानकीपतिः ॥ ४४ ॥

चण्डसत्त्वसमाकीर्णं दण्डकारण्यमाशु सः ।
हिण्डमानो विराधाख्यं खण्डयामास राक्षसम् ॥ ४५ ॥

आत्मप्राप्तिप्रतीक्षस्य प्राप्तमिन्द्रं निरस्यतः ।
आश्रमं शरभङ्गस्य प्राप रामः सहानुजः ॥ ४६ ॥

सिद्धसाध्ये मुनौ तस्मिन् सिद्धिमेयुष्यनुत्तमाम् ।
सुतीक्ष्णात् स गृहीताशीरगस्त्यस्याश्रमं ययौ ॥ ४७ ॥

स्तम्भितोत्तुङ्गविन्ध्याद्रेश्[1]चुलुकीकृतवारिधेः ।
वातापितापिनस्तस्य पादौ जग्राह राघवः ॥ ४८ ॥

उपद्रुतेभ्यो रक्षोभिस्तापसेभ्योऽरिनिग्रहम् ।
प्रतिजज्ञे महाबाहुराशीर्भिस्ते व्यवर्धयन् ॥ ४९ ॥

सचापशस्त्रतूणीरामगस्त्यस्याशिषं वहन् ।
नत्वा जटायुषं मार्गे रामः पञ्चवटीमगात् ॥ ५० ॥

गोदावरीतटे रम्ये स्निग्धदारुनिरन्तरे ।
अङ्के निधाय वैदेहीमावसत् पर्णशालिकाम् ॥ ५१ ॥

अथ शूर्पणखां प्राप्तां पतिभावाभिलाषिणीम् ।
रामः प्रस्थापयामास लक्ष्मणस्यान्तिकं प्रति ॥ ५२ ॥

गतागतपरिक्लिष्टां सीताहरणगत्वराम् ।
कर्णनासं विलूयैनां विससर्जाथ लक्ष्मणः ॥ ५३ ॥

---

१. 'चुलुकाचान्त' इति पाठान्तरम्.

क्रोधशोकातुरा गत्वा खरायेदं जगाद सा ।
दूषणत्रिशिरोभ्यां स ससैन्यो राममभ्यगात् ॥ ५४ ॥

चतुर्दशसहस्राणि रक्षसां खरदूषणौ ।
त्रिशिराश्चाभ्यहन्यन्त राघवेण रणे क्षणात् ॥ ५५ ॥

आर्ता शूर्पणखा वार्तां रावणाय न्यवेदयत् ।
कामक्रोधातुरः सोऽपि मारीचाश्रममासदत् ॥ ५६ ॥

मारीचं प्रेषयामास मायासारङ्गविग्रहम् ।
स्वयं च भिक्षुवेषेण प्राप पञ्चवटीवनम् ॥ ५७ ॥

रामलक्ष्मणयोर्दूरं मारीचेनाशु नीतयोः ।
रथमारोप्य वैदेहीं जगाम दशकन्धरः ॥ ५८ ॥

रुन्धतः पक्षमालूय पक्षिराजो जटायुषः ।
लङ्कायां शिंशिपामूले जानकीं स न्यवेशयत् ॥ ५९ ॥

मारीचमथनो रामस्त्वदृष्ट्वा जनकात्मजाम् ।
सानुजः शोकतप्तस्तामन्वियेष वने वने ॥ ६० ॥

सीतोदन्तं निवेद्याशु जटायोः स्वर्गमीयुषः ।
और्ध्वदैहिकमाधाय[1] प्रतस्थे दक्षिणां दिशम् ॥ ६१ ॥

हत्वा कबन्धं दत्वा च शबर्या उत्तमां गतिम् ।
पम्पां तीर्त्वा हनूमन्तमन्तिकागतमैक्षत ॥ ६२ ॥

ऋश्यमूकाचलं तेन प्रापितः सानुजो विभुः ।
सुग्रीवेण समं सख्यमाततानाग्निसाक्षिकम् ॥ ६३ ॥

प्रक्षिप्य दुन्दुभेः कायं सप्त सालान् विधूय च ।
हत्वा च वालिनं रामः सुग्रीवमभिषिक्तवान् ॥ ६४ ॥

---

१. 'आदाय' इति पाठान्तरम्.

चातुर्मास्यावधौ तेन प्रापितेनानुजन्मना ।
हरीन् प्रास्थापयत् सीतामन्वेष्टुमभितो दिशम् ॥ ६५ ॥

सन्देशं चाङ्गुलीयं च गृहीत्वा पवनात्मजः ।
जाम्बवत्प्रमुखैः सार्धमानेहे दक्षिणाम्बुधिम् ॥ ६६ ॥

सञ्जातपक्षात् सम्पातेर्ज्ञात्वा वार्तां महीभुवः ।
जाम्बवत्प्रेरणाद् दीप्तो हनूमानुदजृम्भत ॥ ६७ ॥

क्षिप्त्वा मैनाकमुद्गच्छन् सुरसां च विजित्य सः ।
हिंसित्वा सिंहिकां चाथ त्रिकूटाचलमाप्तवान् ॥ ६८ ॥

अन्विष्य दृष्ट्वा वैदेहीं दत्वास्या अङ्गुलीयकम् ।
चूडामणिं समादाय बभञ्जोद्यानपादपान् ॥ ६९ ॥

अक्षं हत्वेन्द्रजिद्बद्धो दग्ध्वा लङ्कामशेषतः ।
लङ्घिताब्धिः स रामाय चूडामणिमदान्मुदा ॥ ७० ॥

अथ लक्ष्मणसुग्रीवनीलजाम्बवदङ्गदैः ।
हनूमत्प्रमुखैः सैन्यैः प्रतस्थे रघुनन्दनः ॥ ७१ ॥

दक्षिणाम्बुनिधेस्तीरं यदा सम्प्राप्तवांस्तदा ।
निष्कासितः स लङ्कायां रावणेन विभीषणः ॥ ७२ ॥

चतुर्भिराशरैः सार्धमात्मानं शरणं गतः ।
अभिषिक्तः स रामेण सादरं रावणानुजः ॥ ७३ ॥

अस्त्राग्निचकितश्चैनं वरुणः शरणं ययौ ।
तद्दत्तपद्धतावब्धौ रामः सेतुमबन्धयत् ॥ ७४ ॥

हेतुर्भुवनभाग्यानां केतुर्लङ्काविपत्तये ।
नेतुस्तस्य जयस्तम्भः सेतुः सेन्द्रैर्नतः सुरैः ॥ ७५ ॥

---

१. 'दिशः' इति पाठान्तरम्.

नलसेतुपथेनाशु लङ्घयन् लवणाम्बुधिम् ।
त्रिकूटगिरिमातस्थौ रामभद्रः ससैनिकः ॥ ७६ ॥

शुकसारणयोर्बद्धमुक्तयोर्वानराधिपः ।
रावणस्य किरीटानि हृतवानतिरोषवान् ॥ ७७ ॥

रावणोपहृते दृष्ट्वा मायाराघवमस्तके ।
मूर्च्छितां त्रिजटा सीतां सत्वरं समजीवयत् ॥ ७८ ॥

अङ्गदं प्रेषयन् रामो विदित्वा रावणाशयम् ।
लङ्कामामर्दयामास मर्कटैरुत्कटोद्यमैः ॥ ७९ ॥

ततः प्रववृते तत्र शैलशस्त्रास्त्रयोधिनाम् ।
युद्धमुद्धूतनिध्वानभीषणं कपिरक्षसाम् ॥ ८० ॥

ततः प्रहस्तधूम्राक्षमहापार्श्वमहोदराः ।
मकराक्षविरूपाक्षयूपाक्षा विलयं गताः ॥ ८१ ॥

मेघनादेन नागास्त्रबद्धौ दशरथात्मजौ ।
बन्धनान्मोचयामास तत्क्षणं पक्षिपुङ्गवः ॥ ८२ ॥

नक्तञ्चरेश्वरोन्मुक्तशक्तिच्छिन्नतनुः पतन् ।
हनूमतौषधीं हृत्वा जीवितो रामसोदरः ॥ ८३ ॥

स्वयं पराजिते युद्धाच्छिन्नचापे दशानने ।
कुम्भकर्णं प्रबुध्यन्तं युध्यन्तमवधीद् विभुः ॥ ८४ ॥

मायासीतां विलूयाथ निर्विशन्तं निकुम्भिलाम् ।
जघान मेघनादं तं लक्ष्मणः स रणाङ्गणे ॥ ८५ ॥

हते मूलबले[1] प्राप्तो रावणो रथकार्मुकी ।
इन्द्रदत्तरथस्थेन जवटे रघुसूनुना ॥ ८६ ॥

---

१. 'बन्ध' इति पाठान्तरम् ।

विकर्तनकुलाधीशश्च कृतैर्निशितैः शरैः ।
रावणस्य शिरो यद्यत् सद्यस्तत्तत् समुद्ययौ ॥ ८७ ॥

अगस्त्येनोपदिष्टोऽसावादित्यहृदयं शिवम्[1] ।
निजग्राह दशग्रीवं ब्राह्मेणास्त्रेण राघवः[2] । ८८ ॥

यथोचितं विधिं कृत्वा प्रणमन्तं विभीषणम् ।
लङ्केश्वरं विधायाथ सीतामानाययद् विभुः ॥ ८९ ॥

अग्निं प्रवेशयन्नेनां विशेषेण विशोधयन् ।
विमानं पुष्पकं नाम कामगं प्रारुरोह सः ॥ ९० ॥

अथ लक्ष्मणसुग्रीवविभीषणपुरःसरैः ।
बन्धुभिः सहितोऽयोध्यां प्रपेदे रघुपुङ्गवः ॥ ९१ ॥

भरतस्तरसाऽऽगत्य नत्वा शत्रुघ्नसंयुतः ।
राज्यं प्रत्यार्पयत् तस्मै पादुकायां निवेशितम् ॥ ९२ ॥

मातॄर्गुरूंश्च वन्दित्वा जटास्त्यक्त्वा किरीटवान् ।
हारकङ्कणकेयूरकुण्डलादिकमण्डनः ॥ ९३ ॥

सिंहासनमारूढो वसिष्ठाद्यैर्मुनीश्वरैः ।
सर्वतीर्थजलैः श्रीमानभिषिक्तो रघूत्तमः ॥ ९४ ॥

वानरान् राक्षसांश्चापि विसृज्य प्रीतिपूर्वकम् ।
जानकीसहितः स्वैरमयोध्यामध्युवास सः ॥ ९५ ॥

लोकापवादतः सीतामन्तर्वत्नीं विहाय सः ।
शत्रुघ्नेनार्दयामास लवणं मुनिकण्टकम् ॥ ९६ ॥

वाल्मीकेराश्रमं गत्वा सुषुवे जनकात्मजा ।
पुत्रौ कुशलवौ नाम रामतुल्यपराक्रमौ । ९७ ॥

---

१. 'शुभम्' इति पाठान्तरम् ।

२. 'ब्रह्मास्त्रेण स' इति पाठान्तरम् ।

अथ शूद्रमुनिं हत्वा जीवयन् ब्राह्मणात्मजम् ।
अश्वमेधं स चारेमे पत्नीं कृत्वा हिरण्मयीम् ॥ ९८ ॥

वाल्मीकिरचितं नव्यं रामायणकथामृतम् ।
गायन्तौ तौ कुशलवौ यज्ञशालामवापतुः ॥ ९९ ॥

वाल्मीकिना समानीतां सीतां दृष्ट्वा रघूत्तमः ।
ननन्द नन्दनौ वीरौ पर्यगृह्णाच्च सादरम् ॥ १०० ॥

पुनरग्निप्रवेशाय प्रेरिता जनकात्मजा ।
विवेश विदुषी देवी दत्तरन्ध्रां वसुन्धराम् ॥ १०१ ॥

सितावियहसन्तप्तो रामो रक्षन् वसुन्धराम् ।
आमन्त्रितः कृतान्तेन गूढमागत्य जातुचित् ॥ १०२ ॥

आज्ञाभङ्गक्रुधा तेन द्राविती लक्ष्मणो मुदा ।
फणिराजत्वमासाद्य प्रपेदे दुग्धसागरम् ॥ १०३ ॥

प्रव्रज्य सरयूतोये दिव्यरूपत्वमागतैः ।
बन्धुभृत्यैः समं रामो देवलोकमुपेयिवान् ॥ १०४ ॥

जाम्बवांश्च हनूमांश्च विद्वान् स च विभीषणः ।
त्रयस्ते लोकभूत्यर्थं जीवन्त्यद्यापि सद्गुणाः ॥ १०५ ॥

शत्रुघ्नभरतौ तावच्चक्रशङ्खौ बभूवतुः ।
रामभद्रश्च सम्भेजे गम्भीरं वैष्णवं वपुः ॥ १०६ ॥

प्रपद्य कलशाम्बुधिं प्रकटशङ्खचक्राङ्कितः
प्रकाममधुराकृतिः प्रतिनवाम्बुदश्यामलः ।
प्रसन्नवदनाम्बुजः प्रकृतिसुन्दरीमिन्दिरां
प्रगृह्य करपल्लवे प्रभुरशेत शेषोपरि ॥ १०७ ॥

---

१. 'समारेभे' इति पाठान्तरम् ।

इति विबुधजनानामीहितं पूरयित्वा
निजनिलयमुपेतो निर्मलानन्दसान्द्रः ।
सकलजनमनोज्ञः सर्वसम्पत्प्रदायी
कलयतु कुशलं वः कामदो रामचन्द्रः ॥ १०८ ॥

इति श्रीविष्णुविलासे श्रीरामावतारो नाम
सप्तमः सर्गः



## अष्टमः सर्गः ।

धात्रीभुजां भूरिभरेण खिन्नां
धात्रीं पुरस्कृत्य पुरन्दराद्यैः ।
सत्राशनैः साकमुपेत्य धात्रा
स्तोत्राक्षरैर्विष्णुरभिष्टुतोऽभूत् ॥ १ ॥

साक्षात्कृतस्यास्य समाधिदृष्ट्या
निदेशमावेद्य निलिम्पराजम् ।
सर्वंसहां साममरांश्च सर्वान्
सन्तोषयामास सरोजजन्मा ॥ २ ॥

गतेषु देवेषु हरिस्तदानीं
द्विधा किलात्मानमयं विभेजे ।
एकस्य तत्रोज्ज्वलशेषमूर्ते-
रग्रेऽवतारं च विनिश्चिकाय ॥ ३ ॥

मनोऽभिरामे मधुरानिकेते
महिष्यभूदानकदुन्दुभेर्या ।
सा देवकी सप्तममाप गर्भं
यमष्टमी मूर्तिरगाढ विष्णोः ॥ ४ ॥

ततः समाकृष्य जगत्सवित्री
तमर्भकं यज्जठरं निनाय ।
सा रोहिणी तावदसूत पुत्रं
मुक्तामणिं शुक्तिरिवेन्दुगौरम् ॥ ५ ॥

यथा तुषाराचलमेखलाया
गङ्गाप्रवाहः श्रियमुच्चकार ।
तथायमच्छस्फटिकावदातः
पुपोष शोभां वसुदेवपत्न्याः ॥ ६ ॥

स चावतारोऽष्टम एष विष्णोः
सहायमैच्छन्नवमावतारम् ।
मासो मधुर्माधवमन्तरेण
स्वयं न पुष्णाति वसन्तकालम् ॥ ७ ॥

स देवकीगर्भमथ प्रविष्टः
प्रविष्टजीमूतघटे निशीथे ।
चतुर्भुजश्चारुकिरीटहारो
जगन्निवासो जननं प्रपेदे ॥ ८ ॥

पुरातनं वृत्तमुदीर्य पित्रो-
र्मनुष्यबालत्वमुपेयिवांसम् ।
करे गृहीत्वानकदुन्दुभिस्तं
ततः स शेषानुगतः प्रतस्थे ॥ ९ ॥

कलिन्दकन्यामतिलङ्घ्य गोष्ठे
सुप्तां यशोदामुपनीय बालम् ।
मायाममुष्यास्तनयां गृहीत्वा
तां देवकीं प्रापितवान् निगूढम् ॥ १० ॥

निशम्य बालारवमिष्टहिंसः
कंसः समाकृष्य कुमारिकां ताम् ।
उदाक्षिपद् ग्रावणि सम्प्रहर्तुं
यदा तदा सा दिवमुत्पपात ॥ ११ ॥

भृत्यॉथ दोरष्टकपुष्टभासा
कात्यायनी काञ्चनगौरवर्णा ।
नृशंस हे कंस! तवान्तकोऽभूत्
क्षिताविति व्याहृतवत्ययासीत् ॥ १२ ॥

व्रजेश्वरोऽसावथ नन्दगोपो
व्रजेश्वरी चोरुयशा यशोदा ।
सुतं समासाद्य नितान्तरम्यं
ममज्जतुस्तौ प्रमदाम्बुराशौ ॥ १३ ॥

कदापि कंसाय करं प्रदातुं
नन्दे गते नन्दसुतो मुकुन्दः ।
स्तन्यं ददत्याः कुहनासुदत्याः
प्राणान् बलादाहृत पूतनायाः ॥ १४ ॥

सलीलमुत्क्षिप्तपदारविन्दः
सहस्रधाथो शकटं बिभेद ।
चक्रानिलाकारमुपागतं सः
क्षणात् तृणावर्तमपि व्यहंसीत् ॥ १५ ॥

रामाख्ययायुज्यत रौहिणेयः
कृष्णाख्यया नन्दकुमारकश्च ।
गर्गेण वर्गेण गुणोद्भवानां
नाम्नां बहूनामपि युज्यमानौ ॥ १६ ॥

विचेरतुर्विश्वमनोभिरामौ
नन्दाङ्गणे नन्दितनन्दगोपौ ।
मञ्जुक्वणत्कङ्कणकिङ्किणीकौ
मन्दस्मितोल्लासिमुखाम्बुजौ तौ ॥ १७ ॥

कृष्णोऽथ मुष्णन् नवनीतदुग्धं
स्निग्धैर्मनोभिः सह वल्लवीनाम् ।
चिक्रीड गोपालकबालजालै-
र्वक्रीकृतापाङ्गविलासशाली ॥ १८ ॥

स मृत्तिकामत्सि भवानिति द्राक्
क्रोधाकुलायै व्रजनायिकायै ।
वक्त्रोदरे खे वसुधां दिवं च
प्रदर्शयामास रसातलं च ॥ १९ ॥

दाम्ना कदाचिद्दधिमन्थदोषा-
दुलूखले यायमितो जनन्या ।
दामोदरो नारदशापपङ्का-
दुत्तारयामास कुबेरपुत्रौ ॥ २० ॥

उत्पातमाशङ्क्य तरुप्रपातं
बृहद्वनं तत् सपदि त्यजन्तः ।
वृन्दावनं नाम वनं मनोज्ञं
नन्दादयस्तावदयाम्बभूवुः ॥ २१ ॥

गोवर्धनाद्रेरुपकण्ठभूमौ
गोवत्सकान् पालयितुं प्रवृत्तौ ।
गोपालबालैः सह रामकृष्णौ
गोपीकटाक्षानुगतावगाताम् ॥ २२ ॥

श्रोत्राभिरामैर्मुरलीनिनादै-
र्नेत्राभिरामैश्च वपुर्विलासैः ।
हरिस्तिरश्चामपि चित्तवृत्तिं

वत्साकृतिं वात्सकमध्यलीनं
जिहिंस कंसप्रहितं स दैत्यम् ।
बकाकृतिं चापरमापतन्तं
बभञ्ज चञ्चूयुगलीविदारम् ॥ २४ ॥

अघासुरो वाहसवेषधारी
जग्राह यं राहुरिवामृतांशुम् ।
विवर्धमानेन गलान्तराले
व्यदारि तेनैव सुरारिपाशः ॥ २५ ॥

परीक्षितुं यत्प्रभुतां विधात्रा
तिरस्कृता ये पशुगोपबालाः ।
निर्मानमूनात्ममयानशेषान्
निर्मानमेनं कृतवान् स कृष्णः ॥ २६ ॥

आकम्पितापातिततालजाल-
फलाम्बुसन्तर्पितगोपलोकः ।
हली खराकारमभिद्रवन्तं
सहानुगं धेनुकमाजघान ॥ २७ ॥

कलिन्दजां कालियकालसर्प-
काकोलसम्पर्ककरालतोयाम् ।
जगाम रामेण विना कदाचि-
ज्जगन्निवासः सह गोपगोभिः ॥ २८ ॥

तदम्बुपानप्रतिपन्नमूर्च्छा-
नुज्जीवयन्नात्मजनानपाङ्गैः ।
आपत्य तस्यामधिराजमङ्गा-
न्यावेष्टयन्तं व्यधुनीत धीरः ॥ २९ ॥

तुङ्गे फणीन्द्रस्य फणाग्ररङ्गे
सद्यःसमुद्दीपितरत्नदीपे ।
मञ्जीरमञ्जुक्वणनाभिरामं
नालीकनेत्रो नटनं वितेने ॥ ३० ॥

स्तुतस्तदन्तःपुरसुन्दरीभि-
स्तुष्टोऽनुगृह्यहि मिष्टदायी ।
निपीतदावाग्निरसौ निशायां
निकेतमापन्निजबन्धुवृन्दैः ॥ ३१ ॥

प्रलम्बबाहुर्मुसली सलीलं
प्रलम्बमालम्बितगोपवेषम् ।
विना विलम्बं विममर्द वीरो
विभोर्विहारोऽपि हि विश्वरक्षा ॥ ३२ ॥

निजाप्तकामा नियमावसाने
निमज्जनं वारिणि निर्विशन्तीः ।
गोपीरमुष्णादतिनिर्मलास्या
(वासां)सि चेतांसि च वासुदेवः ॥ ३३ ॥

अवज्ञया यज्ञपरैर्द्विजेन्द्रै-
रसत्कृतस्तद्गृहिणीजनेभ्यः ।
मुदा ददद्भ्यो मुहुरन्नपानं
मुक्तिं प्रतिश्रादिशदम्बुजाक्षः ॥ ३४ ॥

आत्मावमानादतिरोषभाजा
वृष्टिर्विसृष्टा विबुधाधिपेन ।
गोवर्धनं वामकरे दधानो
रुरोध गोपायितगोपलोकः ॥ ३५ ॥

तमव्ययं दिव्यगवी स्वदुग्धै-
गोविन्दनामाङ्कितमभ्यषिञ्चत् ।
ऐरावतोपाहृतदिव्यसिन्धु-
स्वच्छाम्भसा (जं)भनिषूदनोऽपि ॥ ३६ ॥

स्नातो यदा वारिणि सूरजाया
नीतस्तदा वारुणपूरुषेण ।
तातः समानीयत नागलोकात्
पीताम्बरेण द्रुतमात्मगेहम् ॥ ३७ ॥

कलिन्दकन्यापुलिने कदाचित्
कलस्वनापूरितवेणुनालम् ।
रामानुजं रासविलासलोलं
रामाजनो रागवशात् सिषेवे ॥ ३८ ॥

आपीतपीताम्बरनर्मवाणी-
पीयूषवेणीमदमन्थराभिः ।
गोपीभिरुद्दाममनोजपीडा-
वापीनिमग्नाभिरभूयतालम् ॥ ३९ ॥

आपीवरोत्तुङ्गपयोधरासु
वापीषु सर्वास्विव शर्वरीशः ।
गोपीषु सर्वासु विभिन्नमूर्ति-
र्गोविन्द आलक्ष्यत रासकेलौ ॥ ४० ॥

राधामसाधारणमारबाधा-
मादाय हस्तेन मुदा मुकुन्दः ।
तिरोदधेऽसावितराङ्गनानां
चिराय सौभाग्यमदं विनेतुम् ॥ ४१ ॥

आहन्त मोहं तरसा व्रजन्त्यो
व्रजाङ्गनास्तद्विरहाद्विदग्धः ।
विलेपुरुच्चैर्विपिने चरन्त्यो
विकीर्णकेश्यो लुलुठुर्धरण्याम् ॥ ४२ ॥

अत्याकुलास्ता वदनन्यनाथा
विलोक्य कारुण्यरसार्द्रचेताः ।
आविर्भवन्नम्बुजलोचनस्ता
भूयोऽपि रामा रमयाम्बभूव ॥ ४३ ॥

सुदर्शनायादित शापमोक्षं
जघान शत्रुं किल शङ्खचूडम् ।
महोक्षरूपं हतवानरिष्टं
स केशवः केशिनमाममर्द ॥ ४४ ॥

व्योमं रुजन् व्योमसदामतीव
क्षेमङ्करो जातु स मातुलोक्त्या ।
सहाग्रजोऽक्रूररथाधिरूढो
मधोर्निहन्ता मथुरां प्रपेदे ॥ ४५ ॥

निहत्य निर्णेजकमाशु कुब्जा-
मृज्वीं विधाय त्रुटितोग्रचापः ।
सहस्तिपं हस्तिनमर्दयित्वा
मल्लान् स चणूरमुखान् जघान ॥ ४६ ॥

समेत्य सान्दीपनिमाप्तवन्तौ
समस्तविद्या बलवासुदेवौ ।
मृतं समानीय सुतं तदीयं
वितेनतुस्तौ गुरुदक्षिणां च ॥ ४७ ॥

मुकुन्दसन्देशभृदुद्धवोऽथ
प्रविश्य तद्गोकुलमाकुलानाम् ।
व्रजाङ्गनानां प्रियविप्रयोग-
व्यथां कथञ्चिल्लघयाञ्चकार ।४८॥

सैरन्ध्रिकां प्राप्य सरोजनेत्रः
स्वैरं स्मरार्तां रमयाम्बभूव ।
... .... ...
.... .... ... ॥ ४९ ॥

निशम्य जामातृवधं तदानीं
नितान्तरोषादभिषेणयन्तम् ।
जित्वा जरासन्धममुष्य सेनां
बभञ्जतुस्तौ बलदेवकृष्णौ ॥ ५० ॥

मध्येसमुद्रं मणिसौधहर्म्यां
रम्यां पुरीं द्वारवतीं विधाय ।
कृष्णेन वृष्ण्यन्धकभोजवृन्दा-
न्यमून्यनीयन्त किलाखिलानि ॥ ५१ ॥

अनुद्रवंस्तं यवनाधिराजो
भस्मीकृतो येन कृतापकारः ।
भक्त्या विशुद्धं समयूयुजत् तं
मुक्त्या मुकुन्दो मुचुकुन्दभूपम् ॥ ५२ ॥

निहत्य स म्लेच्छबलं निजां ता-
मध्यास्त मध्येऽम्बुधि राजधानीम् ।
स रेवतीं नाम निकामधन्यां
कन्यामुपायंस्त च कामपालः ॥ ५३ ॥

वैदर्भपुत्रीमथ रुक्मिणीं ता-
मात्मानुरक्तामवधूतभूपः ।
बलादपाहृत्य बलेन साकं
रमापतिः स्वां पुरमाजगाम ॥ ५४ ॥

स पूर्णिमायामिव पूर्णचन्द्रो
राजीवराजाविव राजहंसः ।
विदर्भजायां विमलाङ्गलक्ष्म्या-
मत्यादरादारमदम्बुजाक्षः ॥ ५५ ॥

सत्राजिते मित्रसमर्पितं यद्
रत्नं तदादाय किल प्रसेनः ।
वनं गतः केसरिणा हतोऽभूत्
स च द्रुतं जाम्बवता निजघ्ने ॥ ५६ ॥

रमापती रत्नमुडित्यकीर्तिं
प्राप्तामथ स्वस्य निराचिकीर्षुः ।
ऋक्षेन्द्रमासाद्य नियुद्ध्य तान्तात्
तस्मान्मणिं तत्तनयां च लेभे ॥ ५७ ॥

सत्राजिते तं मणिमर्पयित्वा
लब्ध्वा सुतां तस्य च सत्यभामाम् ।
अमन्दमानन्दमविन्दतासौ
लाभो हि लाभान्तरकृद् बुधानाम् ॥ ५८ ॥

सत्राजितं शतधनुर्निजघान सोऽपि
व्यापादितो भगवता मधुसूदनेन ।
भीतो गतः क्वचन तेन हि गान्दिनेयो
नीतो निजं निलयमेव च नीतिभाजा ॥ ५९ ॥

कालिन्दीं मित्रविन्दामुदवहदुचितां किञ्च सत्यां च भद्रां
लक्ष्यच्छिल्लक्षणां चेत्यधिकमधिगतस्तुष्टवानष्टपत्नीः ।
हत्वा प्राग्ज्योतिषेशं नरकमरिभरं तन्निरुद्धाः सहस्रा-
ण्यष्टावष्टौ च कन्याः पुनरहृत दिवः पारिजातं च शौरिः ॥ ६० ॥

प्रद्युम्नं शम्बरारिं सुतमतुलबलं मानयन् बाणबाहुं
छिन्दानो मोचयामास च समसुपयेवानिरुद्धं निरुद्धम् ।
दत्वा मुक्तिं नृगाय द्रुतमभिगतवान् पौण्ड्रकं काशिराजं
तत्पुत्रं चापि चक्री कपिमथ विविदं कामपालोऽप्यहिंसीत् ॥ ६१ ॥

रामः साम्बेन सीरोद्धृतकरिनगरोऽहारयल्लक्ष्मणां द्राक्
संतौ सूर्योपरागे हरिरकृत कुरुक्षेत्रतीर्थोपसेवाम् ।
कृत्वा पार्थान् कृतार्थानथ (परशु ? पशुप)वधूगाढगूढोपगूढ-
प्रौढप्रीतिप्रकर्षः पुनरयमगमद् द्वारकां दारकौघैः ॥ ६२ ॥

युधिष्ठिरमहामखे युधि निहत्य चेदीश्वरं
जघान पुनरागतस्तदनु साल्वभूपालकम् ।
अकृन्तदहितं ततः सपदि दन्तवक्त्रं नृपं
कृपाजलधिराददे किमिव नैष कर्मोचितम् ॥ ६३ ॥

निघ्नत्याजुष्टतीर्थे हलिनि मुनिगिरा वल्कलं[1] दानवं द्रा-
गायातं वित्तपादप्यतिधनमकरोत् साधुशीलं कुचेलम् ।
देवक्यै दर्शयामास च षडपि सुतानादितः कंसभग्नान्
धन्यावन्वग्रहीत्तौ हरिरथ बहुलाश्वञ्च कञ्चिद् द्विजं च ॥ ६४ ॥

कस्यापि ब्राह्मणस्य क्षणरुचिकणवद् दृष्टनष्टान् कुमारा-
नाहर्तुं धाम विष्णोरभजदभिमतेनाशु पार्थेन सार्धम् ।
स्वस्मादेवाम्बुराशौ फणिवरशयनात् प्राप्य चैनान् दशापि
क्ष्मादेवाय प्रयच्छन्नवसदतिसुखं मन्दिरे नन्दसूनुः ॥ ६५ ॥

---

१. बल्वलमिति मुद्रितभागवते ।

एवं भूभारहारी पुनरखिलयदुव्रातसंहारकारी
हेतुं व्याधास्त्रवेधं कमपि हि कलयंस्त्यक्तवान्मर्त्यदेहम् ।
सान्द्रानन्दं पदं तन्निजमजबलजित्सेवितः प्राविशद् यः
सद्यो वः सम्प्रदद्यात्स च विभुरखिलं मङ्गलं शाङ्र्गधन्वा ॥ ६६ ॥

इति रामपाणिवादविरचिते श्रीविष्णुविलासे
बलकेशवावतारो नाम
अष्टमः सर्गः



# श्लोकानुक्रमणी

## REPRINTS

### FROM THE JOURNAL OF THE TRAVANCORE UNIVERSITY ORIENTAL MANUSCRIPTS LIBRARY

| | | Rs. | As. |
|---|---|---|---|
| 1. | Padmanābhaśataka (Stotra) of Svāti Tirunāḷ Rāma Varma Mahārāja. | 0 | 4 |
| 2. | Matsyāvatāraprabandha (Campū) of Melputtūr Nārāyaṇa Bhaṭṭa. | 0 | 4 |
| 3. | Śṛṅgārasudhākarabhāṇa (Drāma) of Aśvati Tirunāḷ Rāma Varma Yuvarāja. | 0 | 6 |
| 4. | Kārtavīryārjunaprabandha (Campū) of Aśvati Tirunāḷ Rāma Varma Yuvarāja. | 0 | 4 |
| 5. | Godavarmayaśobhūṣaṇa (Alaṅkāra) of Aruṇagirikavi. | 0 | 10 |
| 6. | Advaitarasamañjarī (Vedānta) of Nallādhvarin, with the commentary, Vivaraṇa of Kṛṣṇaśiṣya. | 0 | 8 |
| 7. | Muhanāprāsāntyaprāsavyavasthā (Saṅgīta) of Svāti Tirunāḷ Rāma Varma Mahārāja. | 0 | 4 |
| 8. | Āśleṣāśataka (Kāvya) of Nārāyaṇapaṇḍita. | 0 | 4 |
| 9. | Mukundaśataka (Stotra) of Rāmapāṇivāda; with commentary. | 1 | 2 |
| 10. | Meghasandeśa (Kāvya) of Kālidāsa, with the commentary, Sumanoramaṇi of Ṛṣiputra Parameśvara. | 1 | 4 |
| 11. | Śivaśataka (Stotra) of Rāmapāṇivāda. | 0 | 4 |
| 12. | Kamalinīrājahaṁsa (Nāṭaka) of Pūrṇasarasvatī | 1 | 0 |
| 13. | Sāhityasāra (Nāṭya) of Sarveśvara. | 1 | 0 |
| 14. | Līlāvatīvīthi (Drāma) of Rāmapāṇivāda. | 0 | 8 |

## REPRINTS (Contd)

| | | | |
|---|---|---|---|
| 15. | Madanaketucarita (Prahasana) of Rāmapāṇivāda. | 0 | 12 |
| 16. | Laghubhāskarīya (Gaṇita) of Bhāskarācārya, with the commentary, Vivaraṇa of Śaṅkaranārāyaṇa. | 1 | 8 |
| 17. | Jānāśrayī Chandoviciti (Chandas). | 2 | 8 |
| 18. | Kavimanorañjakacampū of Sītārāmasūri. | 1 | 8 |
| 19. | Śrīrāmapañcaśatī of Rāmapāraśava, with the commentary of Rāma and tippaṇī of Punnaśśeri Nīlakaṇṭha Śarma. | 4 | 0 |

*For Copies apply to:*